Table of contents

# THE KENA UPANISHAD

## के नो प नि ष त्

WITH SRI SHANKARA'S COMMENTARIES



ADHYATMA PRAKASHA KARYALAYA
HOLENARSIPUR

# BACK - TO - SHANKARA SERIES

Lovers of Sanskrit are well aware that the Adhyatma Prakasha Karyalaya assigns a very important place, among its many-sided activities aimed at stimulating the study and practice of the Adhyatma Vidya, to the publication of Correct Editions of the precious works of ancient Vedantic teachers like Shankara and Ramanuja, with necessary aids to their study. In particular, the Institution has been actively publishing-in **Kannada, English and Sanskrit**- works calculated to enable students of philosophy to determine and appreciate the exact method of Shankara's System.

Sanskrit works published so far in this series and those that are ready for the press, are listed on the inside of the back cover.

While it is gratifying to note that the intellectuals and patriots of the country are evincing signs of renewed zeal and devotion for the revival of Sanskrit studies, it goes without saying that any fresh publications in the language, have yet to look to the sympathy of generous Mathadhipaties and munificent benefactors, whether for being printed or for their strenuous study.

That Bhagavan Narayana may be graciously pleased to inspire magnanimous patrons to support this noble cause, is the fervent prayer of

The Working Committee
ADHYATMA PRAKASHA KARYALAYA
HOLENARSIPUR
HASSAN DIST., MYSORE STATE, SOUTHERN RAILWAY.

# THE UPANISHADS WITH SRI SHANKARA'S COMMENTARY

# श्रीशाङ्करभाष्यसंयुता उपनिषदः

अध्यात्मग्रन्थावलिः

# THE KENA UPANISHAD

WITH
**Sri Shankara's Commentaries**

Edited By :
**SRI SWAMI SATCHIDANANDENDRA SARASWATI**

# केनोपनिषत्

श्रीशाङ्करभाष्यद्वयसंयुता

श्रीसच्चिदानन्देन्द्रसरस्वतीसंयमिभिः
संशोधिता भाष्यटिप्पणेन समलङ्कृता च

क्रमाङ्कः १००

होळेनरसीपुरे,
अध्यात्मप्रकाशकार्यालये
प्राकाश्यं नीता

शकाब्दाः १८८१

First Edition, 1959
1000 Copies



*Printed in India by*
Y. Narasappa,
at
The Adhyatma Prakasha Press, Holenarsipur.

## GENERAL PREFACE



The present edition of Sri Shankaracharya's Upanishad-Bhashyas, is intended for readers who wish to have at a moderate price the plain text of Shankara's works unencumbered by commentaries and sub-commentaries but provided with such aids to study as a beginner is likely to need in appreciating the original.

Every volume of the series has been provided with an Introduction, Short Notes on points of special interest, References to parallel passages in the other works of the great Acharya, a Summary of the Upanishad, and an Index.

It is hoped that the systematic division of the text into paragraphs with indication of important various readings, the tracing of quotations to their originals, and the close attention paid to typographical details, will all combine to make this edition specially convenient for the earnest reader.

***PUBLISHERS.***

## PREFATORY REMARKS



### The Teaching of the Upanishad

The Kena is the second of the series of smaller Upanishads which I have edited with notes for publication by the Adhyatma Prakasha Karyalaya. Its importance lies in the fact that it directly invites our attention to the Vedantic doctrine of the Universal Witnessing Principle which is the one real Self of us all.

The Upanishad tells us that, while this Self or Brahman can never be perceived by the senses or represented by the intellect, it can nevertheless be intuited as our immediate essence quite other than all that is known or unknown to us. Brahman readily lends itself to be made an object of meditation by its devotees, but this circumstance should not justiy any one to consider it as really an object of sense or intellect. It is rather that metaphysical presence which quickens and enkindles all our instruments of knowledge so as to enable them to throw any light upon their objects. If we could but attend to it introspectively, we could intuit it as the eternal Witnessing Effulgance, each time we are aware of any external object. This knowledge, the Upanisad claims, enables the aspirant to realise himself as identical with that Brahman, his own inalienable and eternal immortality.

### Shankara's Bhashyas and the Gloss thereon

Unlike the other Upanishads, the Kena has two commentaries both ascribed to the famous Sri



Shankaracharya. For reasons stated in the Sanskrit Introduction, I have come to the conclusion that the so-called Vakya Bhashya, cannot have been from the pen of the same author that wrote the other commentary. How far my argument is admissible, I leave the critical reader to judge.

The glossator on the Bhashyas has been generally identified with the Anandagiri that has explained Shankara's Bhashyas on the other classical Upanishads as well as on the Sutra Bhasya. I have stated my reasons as to why I demur to this acquiescence also. In any case, this glossator has not, to my mind, done full justice to many a passage in the Bhashya. I have therefore ventured to offer these notes of my own, explaining at fuller length, many points that would otherwise remain obscure. Students who use the notes should be able to see how far I have been successful in this attempt.

### Acknowledgments

I have received suggestions and criticisms from all the Pandits mentioned in my ***Mandukya-Rahasya Vivriti.*** In particular, I should remember Pandita Pravara ***H. Ananta Murthy Sastrigal and Parakkaje Subrahmanya Bhatta,*** Vedanta Siromani and Visharad, who took the pains of going through the whole of the manuscript and offering helpful suggestions. My Narayana Smaranams to these Pandits.

***EDITOR***

# प्रस्तावना



## उपनिषदः स्थानम्

'केनोपनिषत्' इत्यध्यापकेषु प्रसिद्धिं गतेयमुपनिषत्, सामवेदीय-तलवकारब्राह्मणस्य नवमाध्यायरूपा इति भाष्यतोऽवगम्यते। डाक्टर बर्नेलाख्य पाश्चात्यविदुषा समधिगते तु हस्तलिखितकोशे चतुर्थाध्यायत्वेन परिगणितेति श्रूयते। तस्यास्यानुक्रमसंख्यावैषम्यस्य कारणं ग्रन्थपुरातत्त्वशोधकैरेव सुधीभि-र्निर्धारणीयम् ॥

## उपनिषदो भाष्यद्वयम्

अस्या उपनिषदः श्रीशङ्करभगवत्पादकृतत्वेन प्रसिद्धे द्वे भाष्ये स्तः। उपनिषदन्तरवैसादृश्येन अत्रैव भाष्यद्वयप्रणयने किं प्रयोजकमिति तु न विज्ञायते। यद्यपि टीकाकृता एवं लिखितमस्ति 'केनेषितमित्यादिकां साम-वेदशाखाभेदब्राह्मणोपनिषदं पदशो व्याख्यायापि न तुतोष भगवान् भाष्यकारः शारीरकैर्न्यायैरनिर्णीतार्थत्वादिति न्यायप्रधानश्रुत्यर्थसंग्राहकैर्वाक्यै-र्व्याचिख्यासुः ....' इत्यादि। उपनिषद्भाष्यसमाप्तिपुष्पिकावाक्ये च 'श्रीमच्छङ्कर-भगवतः कृतौ तलवकारोपनिषत्पर्यायकेनोपनिषद्भाष्ये क्षुद्रगणवाक्य-विवरणं समाप्तम्' इत्युपलभ्यते। प्रथा च संप्रतितनाध्यापकगोष्ठीषु प्रथमं पदभाष्यम्, द्वितीयं तु वाक्यभाष्यमिति। तथापि द्वितीयस्मिन् भाष्ये 'न्यायप्रधानश्रुत्यर्थसंग्राहकानि वाक्यानि' नोपलभ्यन्ते, पदशो व्याख्यानमपि तत्र दृश्यत एवेति टीकाकारमतं तावत्र सोपपत्तिकमिति स्फुटं विमर्शकानाम्। 'कतिषुचिद्धस्तलिखितेषु कोशेषु टीकाकारस्य नामान्यथैवोल्लिखितं दृष्ट्वा नासौ भाष्यान्तरव्याकर्ता आनन्दज्ञानापराभिधान आनन्दगिरिरिति युक्तमुत्पश्यामः' इति च दिवंगता प्रोफेसर हिरियण्णार्या अभिप्रयन्तिस्मेति ज्ञायते तत्कृताङ्ग्लानु-वादादुपनिषदः। पुष्पिकावाक्यं केन लिखितम् 'क्षुद्रगणवाक्यविवरणम्' इत्यनेन विशेषणेन किं विवक्षितमिति च विनिर्णेतव्यमस्ति तत्त्वशोधकैः। भवतु वेदं यथा तथा, सर्वथापि केवलटीकाकारवचनविश्वासात्, लौकिकप्रसिद्धेरेव वा, द्वितीय-भाष्यस्य वाक्यभाष्यमित्यन्वर्थनामेति वा तस्य पदभाष्येण समानकर्तृकत्वमिति वा निर्णेतुं नोचितमिति प्रतिभाति ॥



## भाष्यटीकाकारः

प्रकृतभाष्यद्वयटीकाकार एक एवेत्यभ्युपगमेपि सूत्रभाष्यादिटीका-कारादभिन्नोऽयमिति निर्धारणेऽस्ति प्रतिबन्धः। यत इयं टीका भाष्यान्तरटीका-वन्न शैल्या प्रौढा गम्भीरा वा चकास्ति। अस्तु वेदं यथा तथा, अत्र प्रकटिता व्याख्यातुरभिप्रायाः कतिचन भाष्यासंमता इत्यपि भान्ति। यथा चेदं तथा तत्र तत्र निर्दिष्टमस्मत्कृतटिप्पणग्रन्थशरीर एवेति जिज्ञासुभिस्तत एवाधि-गन्तव्यम्। विशिष्य च 'प्रतिबोधविदितम्' (२–४) इत्यत्र 'यत्पुनः प्रतिबोध-शब्देन निर्निमित्तो बोधः प्रतिबोधो यथा सुप्तस्येत्यर्थं परिकल्पयन्ति। सकृद्वि-ज्ञानं प्रतिबोध इत्यपरे' (पृ. ३८) इति भाष्यवाक्यद्वयविवरणावसरे टीका-कारेणानेनोक्तम् "ब्रह्माहमस्मीति चिन्तयतो यावच्चेतोव्यापृतिस्तावत् संप्रज्ञात-समाधिः। निवृत्ते चेतोव्यापारे यः परमानन्दसाक्षात्कारः सौषुप्तानन्दसाक्षा-त्कारवत्, सोऽसंप्रज्ञातसमाधिः प्रतिबोध उच्यते। तदुक्तं वार्तिककृता 'अपरा-यत्तबोधो हि निदिध्यासनमुच्यते' इति। अथवा, अक्रियब्रह्मात्मत्वानुभवे सति प्रमातृत्वानुपपत्तौ पुनर्ज्ञानासंभवात् सद्योमुक्तिकारणं सकृद्विज्ञानं प्रतिबोध उच्यते। 'सकृत्प्रवृत्त्या मृद्नाति क्रियाकारकरूपभृत्। अज्ञानमागमज्ञानं साङ्गत्यं नास्त्यतोऽनयोः ॥' इति।" (के. प. भा. पृ. २०[1]) इति। अत्रोदाहृतवार्तिक-योरुक्ताभिप्रायपरामर्शो नैवास्तीति सुविदितमेव वार्तिके कृतपरिश्रमाणाम्। प्रस्थानत्रयभाष्येषु कुत्राप्यशक्यदर्शनानां संप्रज्ञातासंप्रज्ञातसमाधिसद्योमुक्तिकारण-सकृद्विज्ञानानामत्रत्यमूलभाष्यतात्पर्यमप्यविगणय्य समानयनं तु सकृदवलोकन-मात्रेण भाष्याशयस्य कस्यचिदपि भाष्यवाक्यपर्यालोचनक्षमस्येति न तत्र वक्तव्य-मवशिष्यते ॥

## भाष्यद्वयतुलना

तदेवं टीकाकारस्यास्य प्रसिद्धभाष्यव्याख्यानकारानन्दगिरित्वे प्रमाणा-भावात्, तस्य तत्त्वेन स्वीकारस्य सप्रमाणत्वेऽप्यानन्दगिरेरपि भगवत्पादसम-कालिकत्वाभावेन भाष्यकारीयसंप्रदायानुसारेणैव कृत्स्नमुपनिषद्भाष्यमयं व्याख्यातीत्यत्र विश्वासानवकाशात्, तदाविष्कृतानां केषाञ्चिदभिप्रायाणां प्रत्यक्षेणैव भाष्यविरुद्धत्वेन संदर्शनाच्च नैतदीया टीका भाष्यद्वयतत्त्वनिर्धारणे संतृप्तिकरं साधनं स्यादिति मन्वानेन मया स्वतन्त्रतयात्र टिप्पणं प्रणायि, तुलनात्मकदृष्ट्या विमृशतामनयोर्भाष्ययोर्भाष्यान्तरसंवादविसंवादलिङ्गाभ्यां याथा-तथ्यं कथं नु नाम स्वात्मानं विवृणुयादिति ॥

---

1. धनुश्चिह्नान्तर्दर्शिताः सङ्ख्या आनन्दाश्रमपुस्तकस्थाः ॥

भाष्यद्वयपरिशीलनकुतूहलिनां सविधेऽत्र विषये मम यत्प्रतिभातं तत्संगृह्येह समर्प्यते। (१) भाष्यकारैस्तत्समकालिकैर्वा यैः कैश्चिद्ग्रन्थकर्तृभिर्नोपनिषदो भाष्यद्वयं नामतोऽन्यथा वा परामृष्टमस्तीति तावदवधेयं सुधीभिः। (२) उपनिषदः पाठभेदमङ्गीकृत्यैव यत्र व्याख्यातं भाष्ययोः – यथा 'नाहं मन्ये' इत्यस्य स्थाने 'नाह मन्ये' इति– तत्र नान्यतरस्मिन्नपि भाष्ये पाठान्तरं निर्दिष्टम्, तत्त्यागे हेतुरुपन्यस्तो वा। (३) पदभाष्यानन्तरं वाक्यभाष्यं निर्मितमिति टीकाकारादिभिर्यत्प्रतिज्ञायते सिद्धवत्कृत्य, न तदुपष्टम्भकानि पदभाष्यपरामर्शात्मकानि वाक्यानि क्वचिदपि वाक्यभाष्ये दृष्टिगोचरतां यान्ति। प्रत्युतोपनिषद्गतानां वचोव्यक्तीनां कासाञ्चिद् विवरणप्रकारभेद एव दरीदृश्यते भाष्ययोः। अत्रोदाहरणम्– 'इषितम् प्रेषितम्' (खं. ८,९;७)[1], 'वाचो ह वाचम्' (१५ ; ९). 'यदस्य देवेषु' (३७ ; २१), 'आत्मना विन्दते .....' (४४ ; ३१, ३२), 'इन्द्रः' (५३ ; ३७)– इत्येतेषां व्याख्यानप्रकारः। (४) क्वचिच्च भाष्ययोः परस्परविरुद्धाभिप्राय एवाविष्क्रियते। तद्यथा– 'सकृद्विज्ञानं प्रतिबोध इत्यपरे' (४३) इति पदभाष्ये अस्वारस्यं सूचितं यस्मिन् मते, तदेव स्वीकृतं वाक्यभाष्ये (३३)। 'ब्राह्मीं वाव ते उपनिषदमब्रूम' इति वाक्येन आचार्येण पूर्वमुक्तैव ते उपनिषदित्यवधार्यत (३३) इत्युक्तं पदभाष्ये। वाक्यभाष्ये पुनरेतन्मतं 'न भूताभिप्रायः अब्रूमेत्ययं शब्दः' इति खण्डयित्वा वक्ष्याम इत्यर्थः इति व्याख्यातं (५४) वाक्यम्। (५) वाक्यभाष्ये क्वचित् क्वचित् समादृता वादसरणिर्भाष्यान्तरे न दृश्यते। परिशीलनीयात्र 'ब्रह्म ह देवेभ्यो विजिग्ये' इत्यत्र (३७–४१) न्यस्ता अतिविस्तीर्णा ईश्वरसिद्धिचिन्ताप्रक्रिया। (६) अत्र प्रतिमन्त्रं दत्तान्यवतरणिकावाक्यानि प्रस्थानत्रयभाष्येषु सुदुर्दर्शया शैल्या लिखितानि। तद्यथा – 'श्रोत्रस्य श्रोत्रमित्यादि प्रतिवचनं निर्विशेषस्य निमित्तत्वार्थम् (८). 'यदि मन्यसे सुवेदेति शिष्यविचालना गृहीतस्थिरतायै' (२१). 'इह चेदवेदीत्यवश्यकर्तव्यतोक्तिः, विपर्यये विनाशश्रुतेः' (३४) इत्यादीनि। (७) आदौ संग्रहवाक्यं तदनु तद्विवरणं चेति प्रतिपादनशैली यद्यपि सर्वभाष्यसाधारणी, तथापि वाक्यभाष्योपन्यस्तानि कानिचिद्ग्रहणकवाक्यानि तावतीमतिसंक्षिप्ततां गमितानि यावत्या समनन्तरविवरणावलोकनं विना तेषामन्तर्गर्भिताशयः सर्वथापि दुरूह एव संवृत्तः। 'कर्मानारम्भ इति चेन्न निष्कामस्य संस्कारार्थत्वात्' (३), 'अप्रतिषेधाच्च' (४१) 'न। अनभ्युपगमात्' (४२ पु. ९२)– इत्यादीन्येवंजातीयकानि बहुलमुपलभ्यन्ते अत्रैव भाष्ये न त्वन्यत्र ॥

---

1. अत्रत्याः सङ्ख्याः भाष्यखण्डपरामर्शकाः। अर्धविरामचिह्नं तु ततः परं वाक्यभाष्यखण्डसङ्ख्या ग्राह्या इति सूचयति ॥



## वाक्यभाष्यस्यापि शाङ्करत्वेन कैश्चिद् क्वचिदङ्गीकारः

एतावता विचारसंदर्भेण विश्वसिमि यद्वाचकमहाशयाः संजातप्रत्यया भवेयुः पदवाक्यभाष्ययोरेककर्तृकत्वं श्रीशङ्करभगवत्पादकर्तृकत्वं च वाक्यभाष्यस्य विप्रतिपत्तिस्थानमेवेत्यत्रेति। अथ चात्र न केवलं केनटीकाकारेणानन्दगिरित्वेनाभिमतेन, किं त्वन्यैरपि कैश्चित् प्राचीनव्याख्यातृभिर्भाष्यद्वयस्यास्य शङ्कराचार्यैककर्तृकत्वे एव संमतिराविष्कृतेत्यत्र गमकं विद्यत एव। तद्यथा आनन्दाश्रममुद्रिते पुस्तके प्रकटितायां नारायणविरचित केनोपनिषद्दीपिकायां ग्रन्थकारः स्वव्याख्यामेतच्छ्लोकेनोपसंहरति – 'नारायणेन रचिता शङ्करोक्त्युपजीविना। अस्पष्टपदवाक्यानां केनेषित (?)प्रदीपिका ॥' अत्र खलु 'अस्पष्टपदवाक्यानाम्' इति भाष्यद्वयमपि स्पष्टं परामृष्टमिति गम्यते। तथैव च भाष्यद्वयवाक्यान्युद्धृतानि लक्ष्यन्तेऽत्र व्याख्याने। नारायणश्चायं सुप्रसिद्धोपनिषद्दीपिकाकारात् श्रीशङ्करानन्दादीषदर्वाचीनः, तत्समकालिको वा स्यादित्यभ्यूहितुमस्ति कारणमित्युभयग्रन्थकृत्कृतयोरुपनिषद्दीपिकयोरवलोकनेन निश्चीयेत। एवं च वाक्यभाष्यं शाङ्करत्वेन विस्पष्टं प्रत्यभिजानानां प्राचीनानां प्रागवधिं ज्ञापयति नारायणकृतदीपिकेति पर्यवस्यति। यतस्तत्पूर्वतरैः कैश्चिदपि तथा अभ्यनुज्ञातं नैवोपलभ्यते ॥

## उपनिषत्प्रतिपाद्यो मुख्यविषयः

प्रस्तावनायामस्मिन्नुपस्थापितानामभिप्रायाणां समालोचनेन केनोपनिषद्भाष्यद्वयस्यैककर्तृकत्वतदभावान्यतरनिश्चये कियानुपकारः स्यादित्यत्र ग्रन्थपुरातत्त्वशोधका एव प्रमाणम्। वेदान्तजिज्ञासुभिस्तु भाष्ययोरुभयोरपि सविमर्शावलोकनेन परिशुद्धशाङ्करप्रक्रियानिर्धारणे यदीषदपि सहायो लभ्येत, तावतैव नूत्नतया निर्मितस्य टिप्पणस्य सार्थक्यं हृदि भावयेयमहम् ॥

अल्पाकारायामप्यस्यामुपनिषद्यनल्पमूल्यं वेदान्तार्थरत्नमेकं जिज्ञासूनां पुरतः प्रतिष्ठापितमस्ति। पराग्विषयप्रकाशने प्रभवदपि बाह्यान्तःकरणजातं नैव स्वप्रत्यगात्मभूतं ब्रह्म विषयीकृत्य परिदीपयितुमीष्टे। यत्कारणं व्यवहारे चित्त्वेन विभाव्यमानानां करणानां कूटस्थचिदात्मज्योतिर्व्याप्तानां चिदाभासयुक्तानामेव प्रातिस्विकपराग्विषये व्यापारो न पुनस्तन्निरपेक्षाणां स्वतन्त्राणाम्। एवं च यद्यपि सर्वप्रमाणागोचरत्वात् 'इदं तत्' इति केनापि प्रकारेण प्रतिपत्तुमुपदेष्टुं वा परस्मै न शक्यं ब्रह्मेत्यापाततो भाति, तथापि

तु विदिताद्व्याकृतप्रपञ्चादविदिताच्च तद्बीजभूतादव्याकृतादविद्याकल्पिताद्विलक्षणं सर्वस्य प्रत्यगात्मभूतं सर्वसाक्षि नित्यचैतन्यं ब्रह्मेत्येवं गुरुशिष्यसंप्रदायागतोपदेशविशेषेणागमसंज्ञितेन शक्यमेव तथा साक्षात्कर्तुं परस्मा उपदेष्टुं चेत्ययमनर्घो सार्वत्रिकानुभवाधारो विषयोऽत्र भगवत्या श्रुत्या प्रतिपादितोऽस्ति। एतादृशागमजन्यज्ञानबलादेवेन्द्रादीनामपि महावीर्याणां देवानां सर्वातिशयमहिमवत्त्वं मुख्यामृतत्वलाभश्चेति दृष्टप्रयोजनसंकीर्तनेन चेयं ब्रह्मविद्या संस्तुतात्र ॥

अत्रोपनिषदि ब्रह्मविद्यैव वस्तुतन्त्रा प्राधान्येन उपदिष्टा। विस्तरेण तु कर्मोपास्तिज्ञानानां परस्परसंबन्धः सामवेदीयछान्दोग्योपनिषद्भाष्ये स्पष्टीकृत इति तत एवावगन्तव्यो मुमुक्षुभिरिति विज्ञप्तिः

| | |
|---|---|
| अध्यात्मप्रकाशकार्यालये, | त्र्य्यन्तनिष्णातानामनुचरस्य |
| विकारिसंवत्सरज्येष्ठवदितृतीयायाम् | सच्चिदानन्देन्द्रसरस्वतीभिक्षोः |

# ग्रन्थविभागक्रमः



# विषयानुक्रमणिका

## पदभाष्ये श्रुत्यवतरणिका



## उपनिषदि प्रथमः खण्डः

### शिष्यप्रश्नः



### गुरोः प्रतिवचनम्



### ब्रह्मण इन्द्रियमनोऽगोचरत्वम्



### आगमेनैव शक्यप्रत्यायनं ब्रह्म



### उपास्यरूपं ब्रह्मणो न पारमार्थिकम्





## द्वितीयः खण्डः

### ब्रह्म ज्ञानस्यापि न विषयः



### ब्रह्म कथं वेदनीयम् ?



## तृतीयः खण्डः

### देवतानां मिथ्याभिमानप्राप्तिः



### ब्रह्मणो रूपविशेषेण प्रादुर्भावः



### अग्न्यादीनां गर्वभङ्गः



## चतुर्थः खण्डः



### इन्द्रादीनामतिशयप्राप्तिकारणम्



### ब्रह्मणः उपमोपदेशः

---

# अशुद्धिशोधनम्

| | | |
|---|---|---|
| ३२ | अन्त्ये च इत्यनन्तरम् | "तथा च गर्जितमुपपन्नं भवति यो नस्तद्वेद इति" इति संयोजनीयम् |
| ३६ | तृतीयचतुर्थटिप्पणसंख्ये | व्यत्यस्तक्रमेण निवेशनीये. |
| ४१ | टिप्पणे | एक आत्मा |
| ६६ | १२तम पङ्क्तौ | विक्रियादि |
| ७४ | चतुर्थ टिप्पणे | सति ह्यन्यस्मिन् |
| ८७ | अष्टमटिप्पणे | कर्म वैचित्र्यहेतुः |
| ९० | प्रथमटिप्पणे | बुद्ध्यावारोह |

---



# सङ्केताक्षराणां विवरणम्

| सङ्केतः | विवरणम् |
|---|---|
| अ. | अष्टेकर कंपनी, पूना- एतैः प्रकाशितपुस्तकपाठे |
| आ. | आनन्दाश्रमः, पूना- एतैः प्रकाशितपुस्तकपाठे |
| आ. गि. | आनन्दगिरिकृत उपनिषद्भाष्यटीकायाम् |
| आदि. | महाभारते आदिपर्वणि |
| अव. | अवतरणिकायाम् |
| ई. | ईशावास्योपनिषदि |
| ई. भा. | ईशावास्योपनिषद्भाष्ये |
| ई. सं. भा. | ईशावास्योपनिषत्संबन्धभाष्ये |
| ई. भा. अव. | ईशावास्यभाष्यावतरणिकायाम् |
| ऋ. मं. | ऋग्वेदे मण्डले. |
| ऐ. | ऐतरेयोपनिषदि |
| ऐ. भा. | ऐतरेयोपनिषद्भाष्ये |
| ऐ. भा. अव. | ऐतरेयोपनिषद्भाष्यावतरणिकायाम् |
| ऐ. सं. भा. | ऐतरेयोपनिषत्संबन्धभाष्ये |
| ऐ. ब्रा. | ऐतरेयब्राह्मणे |
| ऐ. आ. | ऐतरेयारण्यके |
| क. | कठोपनिषदि |
| का. भा. | काठकोपनिषद्भाष्ये |
| कौ. | कौषीतक्युपनिषदि |
| गी. | भगवद्गीतासु |
| गी. भा. | भगवद्गीताभाष्ये |
| गी. सं. भा. | भगवद्गीतासंबन्धभाष्ये |
| छा., छां. | छान्दोग्योपनिषदि |

| सङ्केतः | विवरणम् |
|---|---|
| छा· भा. | छान्दोग्योपनिषद्भाष्ये |
| जै· सू. | जैमिनीयसूत्रेषु |
| तै· | तैत्तिरीयोपनिषदि |
| तै· भा· | तैत्तिरीयोपनिषद्भाष्ये |
| तै· ना· | तैत्तिरीये नारायणोपनिषदि |
| तै· ब्रा· | तैत्तिरीयब्राह्मणे |
| प· भा· भा. खं· | पदभाष्यभागे खण्डे |
| प्र· | प्रश्नोपनिषदि |
| पा· सू· | पाणिनीयसूत्रेषु |
| बृ· | बृहदारण्यकोपनिषदि |
| बृ· भा· | बृहदारण्यकोपनिषद्भाष्ये |
| भा. भा· | भाष्यभागे |
| मनु· | मनुस्मृतौ |
| मा· | माण्डूक्योपनिषदि |
| मा· का. | माण्डूक्यकारिकायाम् |
| मा· का· भा· | माण्डूक्यकारिकाभाष्ये |
| मु· मुं· | मुण्डकोपनिषदि |
| मु· सं. भा· | मुण्डकोपनिषत्संबन्धभाष्ये |
| मु· भा. | मुण्डकोपनिषद्भाष्ये |
| मो· ध· | महाभारते मोक्षधर्मपर्वणि |
| वन· | महाभारते वनपर्वणि |
| वा· | वाणीविलासप्रेस्, श्रीरङ्गम्– एतैः प्रकाशितपुस्तकपाठे |
| शत· ब्रा· | शतपथब्राह्मणे |
| शत· ब्रा· मा. | शतपथब्राह्मणे माध्यन्दिनपाठे |
| शा· भा· | शाबरभाष्ये |
| श्वे· | श्वेताश्वतरोपनिषदि |
| सू· भा· | ब्रह्मसूत्रशाङ्करभाष्ये |

॥ ॐ ॥

श्रीमच्छाङ्कर(पद)भाष्यसंयुता

# केनोपनिषत्



ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुःश्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

ओं शान्तिः शान्तिः शान्तिः ॥

## अथ भाष्ये श्रुत्यवतरणिका

### वृत्तार्थानुकीर्तनम्

१. 'केनेषितम्' इत्याद्योपनिषत् परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारम्भः[1] । प्रागेतस्मात् कर्माणि अशेषतः परिसमापितानि । समस्तकर्माश्रयभूतस्य[2] च प्राणस्य उपासनान्युक्तानि, कर्माङ्गसाम-

---

## अथ सच्चिदानन्दसरस्वतीकृतं टिप्पणम्

मनोवागादिजीवातुं मनोवागाद्यगोचरम् ।
विदिताविदितातीतं महः किञ्चिदुपास्महे ॥

1. तलवकारोपनिषदं व्याचिख्यासुर्भगवान् भाष्यकारो वृत्तवर्तिष्यमाणयोः संबन्धं स्फुटीकर्तुं वृत्तं तावदनुद्रवति- केनेषितमित्यादिना। अत्र प्रथममन्त्रोद्दिष्टप्रत्यगर्थब्रह्मस्मरणादेव मङ्गलं कृतं वेदितव्यम्। नवमस्येति। तलवकारशाखीयसामवेदब्राह्मणस्य नवमस्याध्यायस्येत्यर्थः ॥

2. ज्ञानक्रियाशक्त्युभयाश्रितत्वेऽपि क्रियाप्रधानत्वेन समस्तकर्माश्रयभूतस्येत्युक्तिः ॥

विषयाणि[1] च। अनन्तरं च गायत्रसामविषयं दर्शनं[2] वंशान्तमुक्तम्[3] ॥

## कर्मिणां त्रयी गतिः

२. सर्वमेतद् यथोक्तं कर्म च ज्ञानं च[4] सम्यगनुष्ठितं निष्कामस्य[5] मुमुक्षोः सत्त्वशुद्ध्यर्थं भवति। सकामस्य तु ज्ञानरहितस्य केवलानि श्रौतानि स्मार्तानि च कर्माणि **दक्षिणमार्गप्रतिपत्तये**[6] पुनरावृत्तये च भवन्ति । स्वाभाविक्या[7] त्वशास्त्रीयया प्रवृत्त्या पश्वादिस्थावरान्ता अधोगतिः स्यात्। 'अथैतयोः पथोर्न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्[8]' (छां. ५–१०–८) इति श्रुतेः। 'प्रजा ह तिस्रो अत्यायमीयुः'[9] (ऐ. आ. २–१–१, ऋ. मं. ८–१०१–४) इति मन्त्रवर्णात् ॥

---

1. पाञ्चभक्तिकसाप्तभक्तिकसामविषयाणीत्यर्थः। द्र. छा. २–२ प्रभृति ८ पर्यन्ताः खण्डाः ॥ 2. उपासनम् ॥

3. गुरुशिष्यपरम्पराविच्छेदकथनपूर्वकमुक्तमित्यर्थः । वंशानुस्मरणस्याप्यदृष्टजनकत्वमभिप्रेतं श्रुतेरित्यभिप्रायः। वंशान्तमित्यनन्तरं 'कार्यम्' इत्यधिकं लेखकप्रमादात् प्रक्षिप्तमिति टीकातोऽनुमीयते ॥

4. उपासनं च ॥

5. ज्ञानपूर्वकस्य कर्मणो देवलोकादिब्रह्मलोकान्तप्राप्तिफलकस्यापि निष्कामस्य सत्त्वशुद्धिः फलं भवतीत्यर्थः। बृ. भा. अवतरणिका, बृ. भा. ३–३–१ अवतरणिका, गी. भा. अवतरणिका च द्रष्टव्या ॥

6. तन्मार्गेण पितृलोकादिप्राप्तये। बृ. भा. अवतरणिका ६–२, छा. भा. ५–१०–३, प्र. १–९ ॥ 7. अविद्याकृतया।

8. ये तु न विद्यासेविनो नापि इष्टादिकर्मकर्तारः, ते दक्षिणोत्तरोभयमार्गविभ्रष्टा ह्यसकृज्जायन्ते म्रियन्ते चेति श्रुतेरर्थः ॥

9. तिस्रः प्रजाः शास्त्रीयमार्गमतिक्रम्य मार्गान्तरेणैव गता इत्यर्थः ॥



## वर्तिष्यमाणेन संबन्धः

३. विशुद्धसत्त्वस्य तु[1] निष्कामस्यैव बाह्यादनित्यात् साध्यसाधनसंबन्धात्[2], इहकृतात् पूर्वकृताद्वा[3] संस्कारविशेषोद्भवात् विरक्तस्य[4] प्रत्यगात्मविषया जिज्ञासा प्रवर्तते। तदेतद्वस्तु[5] प्रश्नप्रतिवचनलक्षणया श्रुत्या प्रदर्श्यते 'केनेषितम्' इत्याद्यया[6]। **काठके** चोक्तम् 'पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्'[7] (क. २–१–१) इत्यादि। 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'[8] (मुं. १–२–१२) **इत्याद्याथर्वणे** च। एवं हि[9] विरक्तस्य

---

1. पूर्वोक्तकर्मोपासनयोर्निष्कामस्य फलान्तरारम्भकत्वद्योतनार्थस्तुशब्दः॥

2. विरक्तस्येत्यनेनास्य संबन्धः। अत्र पुत्रकर्मोपासनानि साधनानि, यथाक्रमं मनुष्यपितृदेवलोकास्तत्साध्याः ॥ बृ. १–५–१६.

3. पूर्वजन्मकृतादपि चित्तशुद्धिर्भवेन्नेहजन्मकृतादेवेति नियम इति भावः॥ सू. भा. ३–४–५१, ४–१–१८.

4. मु. भा. १–२–१२.

5. केनेषितमिति जिज्ञासोः प्रश्नः। श्रोत्रस्य श्रोत्रमित्यादि गुरोः प्रतिवचनम्। तद्रूपया श्रुत्या जिज्ञासाविषयभूतं प्रत्यगात्मवस्तु प्रदर्श्यत इत्यर्थः ॥

6. तदेतद्वस्तु प्रदर्श्यते इति संबन्धः ॥

7. पराङ्मुखान्येवेन्द्रियाणि सृष्टानीति पराग्दृष्टिरेव प्रायशो जनः । विवेकी तु सहस्रेषु कश्चिदेव भवति यः शनैश्शनैश्चक्षुरादीन्द्रियाणि विनिवर्त्य प्रत्यगात्माभिमुखदृष्टिर्भवति, यतोऽयममृतत्वार्थीति श्रुत्यभिप्रायः ॥

8. साध्यस्य कृतकत्वादनित्यत्वमिति तस्माद्विरक्तो गुरुमेव नित्यार्थजिज्ञासयाभिगच्छतीत्यस्मिन्नर्थे श्रुत्युदाहरणम् ॥

9. एवं कर्मोपास्त्युभयानुष्ठानेन विशुद्धसत्त्वस्यैवेति हिशब्दार्थः ॥

प्रत्यगात्मविषयं विज्ञानं श्रोतुं मन्तुं विज्ञातुं च सामर्थ्यमुपपद्यते[1] नान्यथा ॥

## ब्रह्मविज्ञानप्रयोजनम्

४. एतस्माच्च प्रत्यगात्मब्रह्मविज्ञानात् संसारबीजमज्ञानं[2] कामकर्मप्रवृत्तिकारणम् अशेषतो[3] निवर्तते। 'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः।' (ई. ७) इति मन्त्रवर्णात्। 'तरति शोकमात्मवित्'[4] (छा. ७–१–३), 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे[5]' (मु. २–२–९) इत्यादिश्रुतिभ्यश्च ॥

## ज्ञानकर्मसमुच्चयवादखण्डनम्

५. कर्मसहितादपि[6] ज्ञानादेतत् सिध्यतीति चेत्। न। **वाजसनेयके** तस्यान्यकारणत्ववचनात्। 'जाया मे स्यात्' (बृ. १–४–१७) इति

1. विरक्तस्यैव ज्ञानमुपपद्यते, यत्कारणं तस्यैव श्रवणादिसामर्थ्यं भवति। यस्य श्रवणादिसामर्थ्यमेव नास्ति, का कथा तस्मिन् ज्ञानवार्तायां इति भावः ॥ बृ. भा. २–४–५.

2. आत्मानात्मान्योन्याध्यासरूपमविद्यापराभिधानम्, न त्वध्यासबीजत्वेन कैश्चिदुत्प्रेक्षितं मूलाज्ञानम् । तस्य भाष्ये क्वचिदप्यनुल्लेखात् । संसारबीजमिति तु संसारहेतुरित्यर्थे प्रयुक्तमिति ध्येयम् ॥

3. सुप्तिसमाध्यादौ निवृत्तमपि पुनरुत्तिष्ठतीत्यतो विज्ञानादेवाशेषतो निवर्तेत इत्युक्तम् ॥

4. प्रत्यगात्मब्रह्मदर्शनमात्रेणाज्ञाननिवृत्तिरिति तत्कार्याभाववचनेन श्रुतिद्वयं दर्शयतीति भावः ॥

5. हृदयग्रन्थिः– अविद्याप्रचितः कामो बुद्ध्याश्रयः। तेन हि वासनारूपेण ग्रथ्यते हृदयमिति हृदयग्रन्थिः सः। अज्ञानकार्यत्वात् कामकर्मणां संशयानां च परावरस्य कार्यकारणोभयरूपेणावभासमानस्य परमात्मनः साक्षादहमस्मीति दर्शनात् सहाज्ञानेन हृदयग्रन्थ्यादयोऽप्यत्यन्तं विनश्यन्तीति श्रुतेरर्थः। अज्ञानमात्रमेव शोकमोहादिकारणमित्यत्र द्रष्टव्यम्। सू. भा. १–१–४, बृ. भा. ४–४–६, गी. सं. भा.

6. कर्मसहितादुपासनारूपज्ञानादपीत्यपिशब्दो भिन्नक्रमः ॥



प्रस्तुत्य 'पुत्रेणायं लोको जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोकः' (बृ. १–५–१६) इत्यात्मनोऽन्यस्य लोकत्रयस्य कारणत्वमुक्तं[1] **वाजसनेयके** । तत्रैव च पारिव्राज्यविधाने हेतुरुक्तः 'किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः' (बृ. ४–४–२२) इति । तत्रायं हेत्वर्थः ; प्रजाकर्मतत्संयुक्तविद्याभि[2]र्मनुष्यपितृदेवलोकत्रयसाधनैरनात्मलोकप्रतिपत्तिकारणैः किं करिष्यामः ? न चास्माकं लोकत्रयमनित्यं साधनसाध्यमिष्टम्। येषामस्माकं स्वाभाविको[3]ऽजोऽजरोऽमृतोऽभयो[4] न वर्धते कर्मणा नो कनीयान्[5] नित्यश्च लोक इष्टः । स च नित्यत्वान्नाविद्यानिवृत्तिव्यतिरेकेणान्यसाधननिष्पाद्यः[6]। तस्मात् प्रत्यगात्मब्रह्मविज्ञानपूर्वकः सर्वैषणासंन्यास एव कर्तव्य[7] इति ॥

कर्मसहभावित्वविरोधाच्च[8] प्रत्यगात्मब्रह्मविज्ञानस्य । न ह्युपात्त-

1. कारणत्वमुक्तमिति। पुत्रकर्मविद्यानामिति शेषः । तत्र 'विद्यया देवलोकः' इत्यत्र कर्मसमुच्चितैव विद्या विवक्षिता, कर्मणेत्यत्र तु केवलं कर्म विवक्षितमिति भावः ॥

2. उदाहृतश्रुतौ प्रजाशब्दस्योपलक्षणार्थत्वादिति भावः ॥

3. स्वरूपभूतः ॥

4. अजोऽजर इत्याद्यभय इति यावत् सूचितम् बृ. भा. ४–४–२५.

5. बृ. ४–४–२३.

6. नित्यत्वादिदानीमप्यस्त्येवेत्यविद्यामात्रव्यवहित इत्यवसीयते। अतस्तद्व्यवधाननिवृत्त्यैव तत्प्राप्तिरित्यभिप्रायः। 'निष्पाद्यः' इति । निष्पाद्य इवेत्यर्थः। न हि निष्पाद्यस्य नित्यत्वं संभवतीति ॥

7. प्रत्यगात्मविज्ञानं संपाद्य तद्द्वारा पुत्राद्येषणात्रयस्याविद्याकृतस्य संन्यासः समासादनीय इत्यर्थः। अर्थाद् ब्रह्मविज्ञानार्थिना प्रयत्नपूर्वकं सर्वैषणासंन्यासं कृत्वा ब्रह्मजिज्ञासा कर्तव्येत्यप्युक्तं भवति ॥

8. न केवलं पारिव्राज्यश्रुतिविरोधः, न्यायविरोधश्च समुच्चयवादिपक्षे। ई. सं. भा., मु. सं. भा., ऐ. सं. भा., छा. २–२३–१, तै. भा. १–११, बृ. भा. १–५–१८, गी. सं. भा., सू. भा. ३–४–१६ एतेषु सर्वत्र समुच्चयपक्षो निरस्तः ॥

कारकफलभेदविज्ञानेन कर्मणा प्रत्यस्तमितसर्वभेददर्शनस्य प्रत्यगात्मब्रह्मविषयस्य सहभावित्वमुपपद्यते । वस्तुप्राधान्ये सति अपुरुषतन्त्रत्वाद्[1] ब्रह्मविज्ञानस्य ॥

## ग्रन्थसंबन्धोपसंहारः

६. तस्माद् दृष्टादृष्टेभ्यो[2] बाह्यसाधनसाध्येभ्यो विरक्तस्य[3] प्रत्यगात्मविषया ब्रह्मजिज्ञासेयं 'केनेषितं' इत्यादिश्रुत्या प्रदर्श्यते ॥

## प्रश्नप्रतिवचनरूपेण प्रतिपादने प्रयोजनम्

७. शिष्याचार्यप्रश्नप्रतिवचनरूपेण कथनं तु सूक्ष्मवस्तुविषयत्वात् सुखप्रतिपत्तिकारणं भवति । केवलतर्कागम्यत्वं च दर्शितं भवति । 'नैषा तर्केण मतिरापनेया'[4] (क. १–२–९) इति श्रुतेश्च । 'आचार्यवान् पुरुषो वेद'[5] (छां. ६–१४–२), 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति'[6] (छां. ४-९-३), 'तद्विद्धि प्रणिपातेन'[7] (गी. ४-३४)

---

1. ब्रह्मविज्ञानं ब्रह्मवस्तुस्वरूपमनुसृत्य श्रुतिप्रमाणजन्यमिति वस्तुप्रधानम् अकर्त्रात्मविज्ञानरूपम् । कर्म तु कर्तुमकर्तुमन्यथा वा कर्तुं शक्यत्वात् पुरुषतन्त्रं कर्त्रात्मविज्ञानापेक्षं च । अतो न तयोः समुच्चयो घटते ॥

2. इहामुत्रविषयेभ्यः ॥

3. विरक्तिं विना नैव जिज्ञासेति कर्मनिरपेक्षतासूचनार्थम् । उपलक्षणमेतद् विवेकशमादिसंपन्मुमुक्षुत्वानामिति द्रष्टव्यम् ॥

4. केवलतर्को नाम अनुभवानङ्गभूतः पुरुषमत्यभ्यूहमात्रः । तेन न प्रापणीयेति श्रुत्यर्थः । प्रश्नप्रतिवचनरूपेण प्रतिपादनं केवलतर्कागम्यत्वसूचकं लिङ्गमित्युक्तम् । नेदं स्वकपोलकल्पितं यतः श्रुतिरेवैवमाहेति चशब्दार्थः ॥

5. कर्मविषयेऽप्याचार्यापेक्षायास्तुल्यत्वेऽपि 'आचार्यवान्' इति मतुप्प्रत्ययबलाद्विशिष्टागमवदाचार्योपदेशवानेव वेद नान्य इत्यर्थो लभ्यते ॥

6. आचार्योपदेशादेव विद्या साधुतमत्वं साधकतमत्वं प्राप्नोति । फलप्रापिका भवतीति श्रुतेरर्थः ॥

7. सम्यग्दर्शिभिरुपदिष्टमेव ज्ञानं कार्यक्षममिति स्मृतेरर्थः । 'यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसी'ति वाक्यशेषात् ॥



—इत्यादिश्रुतिस्मृतिनियमाच्च[1] । कश्चिद्गुरुं ब्रह्मनिष्ठं विधिवदुपेत्य[2] प्रत्यगात्मविषयादन्यत्र शरणमपश्यन् अभयं[3] नित्यं शिवमचलमिच्छन् पप्रच्छेति कल्प्यते ॥

---

1. प्रश्नप्रतिवचनरूपत्वं श्रुतेर्दृश्यते । शिष्याचार्यप्रश्नप्रतिवचनरूपेयमुपनिषदिति किंबलात् कल्प्यते? तत्राह- श्रुतिस्मृतिनियमाच्चेति । आचार्यादेव प्राप्तव्या विद्येति नियमदर्शनादित्यर्थः ॥

2. मु. २–१–१२.

3. प्रत्यगात्माभिन्नब्रह्मणोऽन्यत्र कुतः शरणं नास्तीत्यत्र हेतुत्वेन विशेषणान्युपात्तानि 'अभयम्' इत्यादीनि ॥

# अथोपनिषदि प्रथमः खण्डः

## शिष्यप्रश्नः

**केनेषितं पतति प्रेषितं मनः**
**केन प्राणः प्रथमः प्रैति युक्तः ।**
**केनेषितां वाचमिमां वदन्ति**
**चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥**

### इषितम् इत्यस्य व्याख्यानम्—

८. केनेषितम् इत्यादि। केनेषितम्। केन कर्त्रा इषितम् इष्टम् अभिप्रेतं सत्, मनः पतति गच्छति 'स्वविषयं प्रति' इति संबध्यते। इषेराभीक्ष्ण्यार्थस्य गत्यर्थस्य च इहासंभवात्[1], इच्छार्थस्यैवैतद् रूपमिति गम्यते। इषितम् इति प्रयोगस्तु छान्दसः[2] ॥

### इषितम् प्रेषितम्- इति पदद्वयस्यार्थवत्त्वम्—

९. तस्यैव[3] प्रपूर्वस्य[4] नियोगार्थे 'प्रेषितम्' इत्येतत्। तत्र 'प्रेषितम्' इत्येवोक्ते प्रेषयितृप्रेषणविशेषविषया आकाङ्क्षा स्यात्

1. इष आभीक्ष्ण्ये इति क्र्यादिधातोः इष गतावित्यस्य च दिवादेः सेट्कत्वेन 'इषितम्' इति रूपसंभवेऽपि इहार्थासङ्गतेरग्रहणम् ॥

2. इषु इच्छायाम् इति तौदादिकस्य तु 'तीषसहलुभरुषरिषः' (पा. ७–२–४८) इति विकल्पेनेड्विधानेऽपि 'यस्य विभाषा' (पा. ७–२–१५) इति निष्ठाया इण्निषेधात् इष्टम् इत्येव रूपं स्यात्, न त्विषितमिति। अतश्छान्दसत्वाभिधानम्। उत्तरत्र प्रेषितमित्यत्र तु प्रेरणार्थस्वीकारादविरोधः ॥

3. ण्यन्तस्य।

4. उपसर्गयोगेन धात्वर्थस्यान्यथा नयनमिति भावः ॥



'केन प्रेषयितृविशेषेण, कीदृशं[1] वा प्रेषणम्?' इति। 'इषितम्' इति तु विशेषणे सति तदुभयं निवर्तते। कस्येच्छामात्रेण प्रेषितम् इत्यर्थविशेषनिर्धारणात् ॥

यद्येषोऽर्थोऽभिप्रेतः स्यात्, 'केनेषितम्' इत्येतावतैव सिद्धत्वात् 'प्रेषित'मिति न वक्तव्यम्। अपि च शब्दाधिक्यादर्थाधिक्यं युक्तमिति 'इच्छया कर्मणा वाचा वा, केन प्रेषितम्?' इत्यर्थविशेषोऽवगन्तुं युक्तः ॥

न। प्रश्नसामर्थ्यात्। देहादिसङ्घातादनित्यात् कर्मकार्याद् विरक्तः, अतोऽन्यत् कूटस्थं नित्यं वस्तु बुभुत्समानः पृच्छतीति सामर्थ्यादुपपद्यते। इतरथा इच्छावाक्कर्मभिर्देहादिसङ्घातस्य प्रेरयितृत्वं प्रसिद्धमिति प्रश्नोऽनर्थक एव स्यात्[2] ॥

एवमपि प्रेषितशब्दस्यार्थो न प्रदर्शित एव ॥

न। संशयवतोऽयं प्रश्न इति प्रेषितशब्दस्य अर्थविशेष उपपद्यते। किं यथाप्रसिद्धमेव कार्यकरणसङ्घातस्य प्रेषयितृत्वम्, किं वा सङ्घातव्यतिरिक्तस्य स्वतन्त्रस्य इच्छामात्रेणैव[3] मनआदिप्रेषयितृत्वम् – इत्यस्यार्थस्य प्रदर्शनार्थं 'केनेषितं पतति प्रेषितं मनः' इति विशेषणद्वयमुपपद्यते[4] ॥

1. केन हेतुना प्रेषितमित्यर्थस्वीकारे कीदृशं प्रेषणमिति सामर्थ्याल्लभ्यत इति भावः ॥

2. तथा च प्रसिद्धस्यैव कीर्तनादुत्तरमप्यनुवादमात्रं स्यादिति भावः ॥

3. इच्छामात्रेणैव इत्यत्र इच्छा न प्रवृत्तिलक्षणो दोषः, किं तु स्वरूपमेव। तथा च स्वरूपसत्तासंनिधिमात्रेणेत्यर्थः। द्रष्टव्यं तैत्तिरीयके (२–६) सोऽकामयतेत्यस्य भाष्यम् ॥

4. यदि सङ्घातमात्रस्य तर्हि चार्वाकमतसिद्धिः, अथ सङ्घातव्यतिरिक्तस्य चैतन्यज्योतिषः, तर्हि वैदिकात्मवादसिद्धिरित्यतः कतरोऽत्र पक्षः साधीयानिति बुभुत्सया प्रश्न इति भावः ॥ बृ. ४–३–६, सू. भा. ३–३–५३.

**मनोविषयकप्रश्नाभिप्रायः—**

१०. ननु स्वतन्त्रं मनः स्वविषये स्वयं पततीति प्रसिद्धम्। तत्र कथं प्रश्न उपपद्यत इति? उच्यते। यदि स्वतन्त्रं मनः प्रवृत्तिनिवृत्तिविषये स्यात्, तर्हि सर्वस्यानिष्टचिन्तनं न स्यात्। अनर्थं च जानन् संकल्पयति, अत्युग्रदुःखे[1] च कार्ये वार्यमाणमपि प्रवर्तत एव मनः। तस्माद् युक्त एव 'केनेषितम्' इत्यादिप्रश्नः ॥

**प्राणेन्द्रियविषयकः प्रश्नः—**

११. केन प्राणः युक्तः नियुक्तः प्रेरितः सन् प्रैति गच्छति स्वव्यापारं प्रति? 'प्रथमः' इति प्राणविशेषणं स्यात्। तत्पूर्वकत्वात् सर्वेन्द्रियप्रवृत्तीनाम्[2]। केन इषितां वाचम् इमां शब्दलक्षणां वदन्ति लौकिकाः। तथा चक्षुः श्रोत्रं च स्वे स्वे विषये क उ देवः द्योतनवान् युनक्ति नियुङ्क्ते प्रेरयति? ॥ १ ॥

## गुरोः प्रतिवचनम्

**श्रोत्रस्य श्रोत्रं मनसो मनो य-**
**द्वाचो ह वाचं स उ प्राणस्य प्राणः।**
**चक्षुषश्चक्षुरतिमुच्य धीराः**
**प्रेत्यास्माल्लोकादमृता भवन्ति ॥२॥**

**श्रोत्रस्य श्रोत्रम् इति प्रतिवचनस्य प्रश्नानुरूप्ये आक्षेपसमाधाने—**

१२. एवं पृष्टवते योग्याय[3] आह गुरुः। शृणु यत् त्वं पृच्छसि मनआदिकरणजातस्य को देवः स्वविषयं प्रति प्रेरयिता,

---

1. 'अभ्यग्रदुःखे' इति (वा ॥) पाठेऽतिसन्निहितदुःखे इति व्याचक्षीत ॥
2. छा. ५-१-१२, १५.　　3. मु. १-२-१३



कथं वा प्रेरयतीति। **श्रोत्रस्य श्रोत्रम्।** शृणोत्यनेनेति श्रोत्रम्, शब्दस्य श्रवणं प्रति करणं शब्दाभिव्यञ्जकं श्रोत्रमिन्द्रियम्। तस्य श्रोत्रं स यस्त्वया पृष्टः 'चक्षुः श्रोत्रं क उ देवो युनक्ती'ति ॥

असौ एवं विशिष्टः श्रोत्रादीनि नियुङ्क्ते इति वक्तव्ये, नन्वेतदननुरूपं प्रतिवचनं 'श्रोत्रस्य श्रोत्रम्' इति?

नैष दोषः। तस्य अन्यथा विशेषानवगमात्। यदि हि श्रोत्रादिव्यापारव्यतिरिक्तेन स्वव्यापारेण विशिष्टः श्रोत्रादिनियोक्ता अवगम्येत दात्रादिप्रयोक्तृवत्[1], तदा इदमननुरूपं प्रतिवचनं स्यात्। न त्विह श्रोत्रादीनां प्रयोक्ता स्वव्यापारविशिष्टो लवित्रादिवदधिगम्यते। श्रोत्रादीनामेव तु संहतानां व्यापारेण आलोचनसंकल्पाध्यवसायलक्षणेन[2] फलावसानलिङ्गेन[3] अवगम्यते। अस्ति हि श्रोत्रादिभिरसंहतो यत्प्रयोजनप्रयुक्तः श्रोत्रादिकलापः, गृहादिवदिति संहतानां परार्थत्वादवगम्यते श्रोत्रादीनां प्रयोक्ता[4]। तस्मात् अनुरूपमेवेदं प्रतिवचनं 'श्रोत्रस्य श्रोत्रम्' इत्यादि ॥

---

1. यथा दात्रस्य लवनार्थं प्रयोक्ता, यथा वा वासीप्रभृत्यायुधानां तक्षणाद्यर्थं प्रयोक्ता तत्तदायुधव्यतिरिक्तेनापि स्वव्यापारेण हस्तादिकृतेन व्यापारवान् भवति तथा नैवात्मा श्रोत्रादिव्यतिरिक्तेन स्वव्यापारेणापि व्यापारवानिति भावः ॥ :सू. भा. २-३-४०.

2. आलोचनमिन्द्रियवृत्तिः, संकल्पो मनोवृत्तिः, अध्यवसायो निश्चयो बुद्धिवृत्तिः— इत्येवंरूपेण व्यापारेणेत्यर्थः ॥

3. फलम् अवगतिर्यदवसानानीन्द्रियालोचनादीनि। यद्यप्यवगतिर्नित्यैव, आत्मचैतन्यस्वरूपत्वात्, तथापि 'इदं मया श्रुतम्' इत्यादिरीत्याऽऽलोचनाद्यन्ते जातमिव लक्ष्यते लौकिकैरिति फलमिव फलमित्युच्यते ॥

4. श्रोत्रादयः, तदसंहतस्वार्थचेतनार्थाः। संहतत्वात्, स्वाम्यर्थगृहादिवत् – इत्यनुमानेनैव सामान्यजनैरप्यवगन्तुं शक्यते नित्यसिद्धोऽपीत्यर्थः। ऐ. भा. १-३, तै. २-७, प्र. ४-१, क. भा. २-२-१.

## श्रोत्रस्य श्रोत्रमित्यादौ पदार्थः—

१३. कः पुनरत्र पदार्थः श्रोत्रस्य श्रोत्रमित्यादेः ? न ह्यत्र श्रोत्रस्य श्रोत्रान्तरेणार्थः । यथा प्रकाशस्य प्रकाशान्तरेण ॥

नैष दोषः । अयमत्र पदार्थः । श्रोत्रं तावत् स्वविषयव्यञ्जनसमर्थं दृष्टम् । तच्च[1] स्वविषयव्यञ्जनसामर्थ्यं श्रोत्रस्य चैतन्ये ह्यात्मज्योतिषि नित्येऽसंहते सर्वान्तरे सति भवति नासती[2]त्यतः 'श्रोत्रस्य श्रोत्रम्' इत्याद्युपपद्यते। तथा च श्रुत्यन्तराणि 'आत्मनैवायं ज्योतिषाऽऽस्ते' (बृ. ४–३–६), 'तस्य भासा सर्वमिदं विभाति' (मु. २–२–१०), 'येन सूर्यस्तपति तेजसेद्धः' (तै. ब्रा. ३–१२–९–७) इत्यादीनि। 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्'[3] (गी. १५–१२), 'क्षेत्रं[4] क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥' (गी. १३–३३) इत्यादि[5] **गीतासु । काठके** च 'नित्योऽनित्यानां चेतनश्चेतनानाम्' (क. २–२–१३) इति श्रोत्राद्येव सर्वस्याऽऽत्मभूतं चेतनमिति प्रसिद्धम्। तदिह निवर्त्यते। अस्ति

1. चस्त्वर्थे ॥

2. यद्यपि श्रोत्रेण शृणोतीत्येव लोके व्यवहारः,तथाप्यात्मनो नित्यचैतन्य ज्योतिषा दीप्तमेव श्रोत्रं स्वविषयं शब्दं व्यञ्जयति परमार्थतो न स्वतस्तस्य श्रवणसामर्थ्यमस्ति। तद्यद्व्याप्तं श्रोत्रं यदाभासं च सच्छृणोतीति व्यवहाराय कल्पते तच्छ्रोत्रस्यापि श्रोत्रं नित्यचैतन्यमवगन्तव्यम् । एवं 'मनसो मनः' इत्यादावपि द्रष्टव्यमिति भावः । क. भा. २–१–३, ऐ. भा. ३–१, बृ. भा. १–४–७, ३–४–२.

3. तत्तेजोऽपि चैतन्यभासितमेव सर्वं भासयते इत्यर्थः ॥

4. अत्र क्षेत्रशब्देन सूक्ष्मशरीरमपि गृह्यते ॥

5. इत्यादीत्यादिशब्देन 'ज्योतिषामपि तज्ज्योतिः' (गी. १३–१७) इत्यादेर्ग्रहणम् ॥



किमपि विद्वद्बुद्धिगम्यं[1] सर्वान्तरतमं[2] कूटस्थ[3]मजमजरममृतमभयम्[4] श्रोत्रादेरपि श्रोत्रादि तत्सामर्थ्यनिमित्तम् इति प्रतिवचनं शब्दार्थश्चोपपद्यत एव ॥

## मनसोऽपि मनस्त्वदायक आत्मा—

१४. तथा मनसः अन्तःकरणस्य मनः । न ह्यन्तःकरणम् अन्तरेण चैतन्यज्योतिषा दीपितं[5] स्वविषयसङ्कल्पाध्यवसायादिसमर्थं[6] स्यात्। तस्मान्मनसोऽपि मन इति। इह बुद्धिमनसी एकीकृत्य निर्देशो 'मनसः' इति[7] ॥

## वाचोऽर्थव्यञ्जनसामर्थ्यदातापि आत्मा—

१५. यद्वाचो ह वाचम्। यच्छब्दो यस्मादर्थे श्रोत्रादिभिः सर्वैः संबध्यते 'यस्मात् श्रोत्रस्य श्रोत्रम्', 'यस्मान्मनसो मनः' इत्येवम्[8] । 'वाचो ह वाचम्' इति द्वितीया प्रथमात्वेन विपरिणम्यते। 'प्राणस्य

1. विद्वद्बुद्ध्या संस्कृतया अनुभवानुगृहीतया श्रोत्रस्य श्रोत्रम् इत्यादिरीत्या शक्यावगमम् । क. भा. १–३–१२ ; गी. भा. २–२१. बुद्ध्या विषयीकृतमिति तु नार्थः । बृ. भा. १–४–१०.

2. बृ. ३–४–२ ; तै. २–५.

3. कूटवत् स्थितम्, निर्विकारमित्यर्थः ॥ 4. बृ. ४–४–२५.

5. 'दीपितम्' इति भावार्थे । 'चैतन्यज्योतिषो दीधितिम्' इति पाठान्तरम् ॥

6. 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' (बृ. १–५–३) इति श्रुत्युक्ता अनुक्ताश्च स्मरणादयोऽत्र ग्राह्याः ॥

7. संकल्पविकल्पात्मकं मनः, निश्चयात्मिका बुद्धिरिति च क्वचिद् वृत्तिभेदादन्तःकरणं व्यपदिश्यते । इह त्वन्तःकरणसामान्यमित्यर्थे एव मनःशब्दः प्रयुक्तः इति भावः ॥ सू. भा. २–३–३२.

8. यस्माच्छ्रोत्रादेरपि श्रोत्रादि तस्मात् श्रोत्राद्यात्मभावमतिमुच्यैव प्रत्यगभिन्नब्रह्मज्ञानेनामृता भवन्तीति संबन्धः इति भावः ॥

प्राणः' इति दर्शनात्, 'वाचो ह वाचम्' इत्येतदनुरोधेन 'प्राणस्य प्राणम्' इति द्वितीयैव कस्मान्न क्रियते? न। बहूनामनुरोधस्य युक्तत्वात्, 'वाचम्' इत्यस्य 'वाक्' इत्येतावद्वक्तव्यम् 'स उ प्राणस्य प्राणः' इति शब्दद्वयानुरोधेन। एवं हि बहूनामनुरोधो युक्तः कृतः स्यात्[1]। पृष्टं च वस्तु प्रथमयैव निर्देष्टुं युक्तम्[2] ॥

**प्राणस्यापि प्राणनसामर्थ्याधायक आत्मा—**

१६. स यस्त्वया पृष्टः[3], प्राणस्य प्राणाख्यवृत्तिविशेषस्य प्राणः। तत्कृतं हि प्राणस्य प्राणनसामर्थ्यम्। न ह्यात्मना अनधिष्ठितस्य प्राणनम् उपपद्यते। 'को ह्येवान्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्'[4] (तै. २-७), 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति' (क. २-२-३) इत्यादिश्रुतिभ्यः। इहापि च वक्ष्यते 'येन प्राणः प्रणीयते। तदेव ब्रह्म त्वं विद्धि' (१-९) इति ॥

१७. श्रोत्रादीन्द्रियप्रस्तावे घ्राणप्राणस्य ननु युक्तं ग्रहणम्[5]?

1. वाचम् इत्यस्य वागिति विपरिणामे एकस्यैव विपरिणामः, 'स उ प्राणस्य प्राणः' इत्यत्र द्वितीयाकरणे तु द्वयोरिति प्रथमात्वेन विपरिणामे लाघवमस्ति, सर्वत्र प्रथमा स्वीकारेण बहूनामनुरोधोऽपि भविष्यतीत्यभिप्रायः ॥

2. 'क उ देवः' इति पृष्टं वस्तु 'वाचो वाग्रूपः' इति प्रथमयैव निर्देष्टुं युक्तमित्यधिका युक्तिरस्मत्पक्षे इत्यभिप्रायः ॥

3. 'स देवः' इति शेषः ॥

4. एष आकाशे परमे व्योम्नि गुहायां निहितः आनन्द आनन्दरूप आत्मा यदि न स्यात् को नाम प्राणापानव्यापारं कर्तुं शक्नुयादिति श्रुतेरर्थः। आकाशवत्सर्वव्यापी आनन्दस्वरूप आत्मा यदि न स्यादिति वा॥ सू.भा. १-१-२२.

5. प्राणशब्दस्य मुख्यप्राणघ्राणप्राणोभयवाचकत्वे प्रसिद्धे सति, इन्द्रियप्रकरणवशात् घ्राणस्यैव ग्रहणं ननु युक्तम् इति पूर्वपक्षिण आकूतम्। 'घ्राणस्यैव प्राणस्य न तु युक्तं ग्रहणम्' (वा.) 'घ्राणस्यैव ग्रहणं युक्तं न तु प्राणस्य' इति पाठान्तरादानं नापेक्षितम् ॥



सत्यमेवम्। प्राणग्रहणेनैव तु घ्राणप्राणस्य ग्रहणं कृतमेव मन्यते श्रुतिः[1]। **सर्वस्यैव करणकलापस्य यदर्थप्रयुक्ता प्रवृत्तिः तद्ब्रह्म इति प्रकरणार्थो[2] विवक्षितः ॥**

**चक्षुषोऽपि चक्षुष्टमात्मनः—**

१८. तथा चक्षुषश्चक्षुः। रूपप्रकाशकस्य चक्षुषो यद्रूपग्रहणसामर्थ्यम्, तदात्मचैतन्याधिष्ठितस्यैव। अतश्चक्षुषश्चक्षुः[3] ॥

**एषणात्यागेनैवामृतत्वप्राप्तिः—**

१९. प्रष्टुः पृष्टस्यार्थस्य ज्ञातुमिष्टत्वात् श्रोत्रादेः श्रोत्रादिलक्षणं यथोक्तं ब्रह्म 'ज्ञात्वा' इत्यध्याह्रियते। 'अमृता भवन्ति' इति फलश्रुतेश्च[4]। ज्ञानाद्धि अमृतत्वं प्राप्यते। ज्ञात्वा 'अतिमुच्य' इति सामर्थ्यात् श्रोत्रादिकरणकलापम् उज्झित्वा[5]। श्रोत्रादौ ह्यात्मभावं कृत्वा तदुपाधिः सन् तदात्मना जायते म्रियते संसरति च[6]। अतः श्रोत्रादेः

1. मुख्यप्राणव्यापारेणैव व्यापारवत्त्वादिन्द्रियाणां प्राणशब्दभाक्त्वम्। तदिह मुख्यप्राणग्रहणेनैव घ्राणप्राणस्यापि ग्रहणं कृतं भवतीति श्रुत्याशयः। ऐ.भा. ३-१, छा. ५-१-१५.

2. यत्प्रयोजननिर्वृत्त्यर्थं करणानि प्रवर्तन्ते तस्य करणस्वामिनः परमार्थस्वरूपं ब्रह्मेत्यर्थः। ऐ. भा १-३, क. २-२-१.

3. 'दृष्टेर्द्रष्टा' इत्यादिश्रुत्यर्थोऽत्रानुसंधेयः। ऐ. भा. २ अव.; बृ. १-४-१०.

4. न केवलं श्रोतुर्ज्ञेयत्वेनेष्टत्वात्, किं तु ज्ञानादेव मुक्तिरिति श्रुतिप्रसिद्धेरपीति भावः। चशब्दाद्वाक्यद्वयसांगत्यार्थं चेति बोध्यम्। अन्यथा चक्षुषश्चक्षुः' 'धीराः' प्रेत्यामृता भवन्तीति वाक्यभेदप्रसङ्गात्। अध्याहारपक्षे तु ज्ञात्वा अमृता भवन्तीत्येकवाक्यता स्यात् ॥

5. एतदनन्तरं 'विमुच्यते' इति पाठस्तु न साधुः। अतिमुच्य परित्यज्येत्युक्ते किम् इति भवत्याकाङ्क्षा। प्रकृतत्वात् श्रोत्रादिकलापम् इत्यर्थवशादव गम्यते। सामर्थ्यात् औचित्यादिति भावः ॥

6. श्रोत्रादिकरणकलापपरित्यागस्तु तदात्माभिमानत्यागादेव। न हि तदभिमानं विना केवलस्यात्मनः संसारः शक्यकल्पनमिति भावः ॥

श्रोत्रादिलक्षणं ब्रह्म आत्मेति विदित्वा अतिमुच्य श्रोत्राद्यात्मभावं परित्यज्य। ये श्रोत्राद्यात्मभावं परित्यजन्ति ते धीरा धीमन्तः। न हि विशिष्टधीमत्त्वमन्तरेण[1] श्रोत्राद्यात्मभावः शक्यः परित्यक्तुम्। प्रेत्य व्यावृत्य अस्माल्लोकात् पुत्रमित्रकलत्रबन्धुषु ममाहंभावसंव्यवहारलक्षणात्[2]। त्यक्तसर्वैषणा भूत्वेत्यर्थः[3]। अमृताः अमरणधर्माणो भवन्ति। 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' (तै. ना. २-८) 'पराञ्चि खानि व्यतृणत्....आवृत्तचक्षुरमृतत्वमिच्छन्'[4] (क. २-१-१) 'यदा सर्वे प्रमुच्यन्ते .... अत्र ब्रह्म समश्नुते'[5] (क. २-३-१४) इत्यादिश्रुतिभ्यः॥

## एषणात्यागिनाममृतत्वमेव—

२०. अथवा 'अतिमुच्य' इत्यनेनैव एषणात्यागस्य सिद्धत्वात्[6] अस्माल्लोकात् प्रेत्य अस्माच्छरीरात्प्रेत्य 'मृत्वा' इत्यर्थः[7] ॥ २ ॥

1. ब्रह्मात्मधीरेव विशिष्टा धीः श्रोत्रादीनामपि साक्षिभूतं प्रत्यक्चैतन्यरूपं ब्रह्मैवाहमित्यसाधारणज्ञानवत्त्वं विनेत्यर्थः। श्रोत्राद्यात्मभावापादकधीमत्त्वस्य नैसर्गिकत्वात् सर्वलोकसाधारण्यम्। अस्यास्तु श्रुत्याचार्यप्रसादं विना अलभ्यत्वाद् विशिष्टत्वमिति ध्येयम्॥

2. श्रोत्रादिष्वहंममताविनाशात्पुत्रादिष्वप्यहंममभावलक्षणव्यवहाराद्व्यावृत्तिरात्यन्तिकी भवतीति भावः॥ ऐ. भा. २-४.

3. दृष्टादृष्टेष्टविषयसमुदायो हि लोकः। तदस्माल्लोकाद्व्यावृत्येति सर्वैषणात्याग एव विवक्षित इति भावः॥ तै. भा. २-८, बृ. भा. ३-५-१.

4. अत्रावृत्तचक्षुरित्येषणात्याग एव विवक्षित इति भावः॥

5. हृदि श्रिताः सर्वे कामा यदा प्रमुच्यन्ते इत्यपि सर्वैषणात्यागो विवक्षित इति भावः। सर्वैषणात्यागाज्जीवन्मुक्तिरित्यपि श्रुत्योक्तम्॥

6. 'प्रेत्य' इत्यस्यैषणात्यागो न विवक्षणीयं इति शेषः। किं त्वन्यथैव व्याख्येयः प्रेत्यशब्द इत्याह अस्मादिति॥

7. मरणानन्तरं यथाऽऽत्मज्ञानविहीनाः पुनः शरीरान्तरं गृह्णन्ति न तथा ज्ञानिन इत्यमृता भवन्ति। अतः परं मरणरहिता भवन्तीत्यर्थः। यत्तु व्याख्यानम् जीवन्मुक्तेर्गौणत्वाद्देहपातानन्तरमेव मुख्यामृतत्वं भवतीति तदनादेयम्। मुक्तेर्निगडभङ्ग इवाभावरूपत्वानुपपत्तेः॥ बृ. भा. ४-४-६, क. भा. २-२-१, २-३-१४. मु. भा. ३-२-६.



### ब्रह्मण इन्द्रियमनोऽगोचरत्वम्

**न तत्र चक्षुर्गच्छति**
**न वाग्गच्छति नो मनः।**
**न विद्मो न विजानीमो**
**यथैतदनुशिष्यात् ॥ ३ ॥**

## श्रोत्रादीनि स्वात्मभूतं ब्रह्म न विषयीकर्तुमुत्सहन्ते—

२१. यस्मात् श्रोत्रादेरपि श्रोत्रादि, आत्मभूतं ब्रह्म अतो न तत्र तस्मिन् ब्रह्मणि चक्षुः गच्छति। स्वात्मनि गमनाऽसंभवात्। तथा न वाग् गच्छति। वाचा हि शब्द उच्चार्यमाणः, अभिधेयं प्रकाशयति यदा, तदा अभिधेयं प्रति वाग् गच्छतीत्युच्यते। तस्य च शब्दस्य तन्निर्वर्तकस्य करणस्य[1] च आत्मा[2] ब्रह्म। अतो न वाग्गच्छति। यथा अग्निर्दाहकः प्रकाशकश्चापि सन् न ह्यात्मानं प्रकाशयति दहति वा, तद्वत्। नो मनः। मनश्चान्यस्य संकल्पयितृ अध्यवसातृ च सत् नात्मानं सङ्कल्पयति अध्यवस्यति च। तस्यापि ब्रह्म आत्मेति[3]॥

## ब्रह्मोपदेशे तद्ग्रहणे च यत्नातिशय आवश्यकः—

२२. इन्द्रियमनोभ्यां हि वस्तुनो विज्ञानम्। तदगोचरत्वात् न विद्मः तद् ब्रह्म ईदृशमिति। अतो न विजानीमः यथा येन प्रकारेण एतत् ब्रह्म अनुशिष्यात् उपदिशेत् शिष्यायेत्यभिप्रायः[4], यद्धि करण-

1. वाक्छब्देन शब्दस्तन्निष्पादकं करणं चेत्युभयं विवक्षितमिति भावः॥

2. परमार्थस्वरूपम् इत्यर्थः॥

3. न हि करणानां चक्षुर्वागादीनामात्मनोऽन्यत् स्वतन्त्रं स्वरूपमस्ति, येनात्मानं तानि विषयीकुर्युरित्याशयः॥

4. स्वयं विदित्वैव हि परान् उपदेष्टुं शक्नोति॥

गोचरम् तदन्यस्मै उपदेष्टुं शक्यं जातिगुणक्रियाविशेषणैः[1]। न तज्जात्यादिविशेषणवद् ब्रह्म। तस्माद् विषमं शिष्यान् उपदेशेन प्रत्याययितुम् इति उपदेशे तदर्थग्रहणे च यत्नातिशयकर्तव्यतां दर्शयति 'न विद्मो न विजानीमो यथैतदनुशिष्यात्'[2] इति ॥

### आगमेनैव शक्यप्रत्यायनं ब्रह्म

**अन्यदेव तद्विदिता-**
**दथो अविदितादधि।**
**इति शुश्रुम पूर्वेषां**
**येनस्तद्व्याचचक्षिरे ॥४॥**

### व्याकृताव्याकृताभ्यामन्यद् ब्रह्म--

२३. अत्यन्तमेव उपदेशप्रकारप्रत्याख्याने प्राप्ते तदपवादोऽयमुच्यते। सत्यमेवं प्रत्यक्षादिभिः प्रमाणैर्न परः प्रत्याययितुं शक्यः। आगमेन[3] तु शक्यत एव[4] प्रत्याययितुमिति[5] तदुपदेशार्थमागममाह 'अन्यदेव तद्विदितादथो अविदितादधि' इति। अन्यदेव पृथगेव तत्। यत् प्रकृतं 'श्रोत्रादीनां श्रोत्रादि' इत्युक्तम् अविषयश्च[6] तेषाम्, तत्

1. तै. भा. २-९; मा. भा. मं. ७; गी. भा. १३-१२; बृ. २-३-६.
2. 'न विद्म इत्यादि' पा ॥ एतद्वाक्यमुत्तरेणापि योजयितुं शक्यते ॥
3. अनुभवानुसार्युपदेशेन गुरुसंप्रदायागतेन ॥
4. न हि प्रमाणागम्यमित्येतावता वस्तु न शक्यतेऽवगन्तुं प्रत्याययितुं वा परान्। न हि जाग्रदाद्यवस्था इन्द्रियमनोऽनवगम्या अपि न वेद्यन्ते प्रकारान्तरेण। तथा प्रकृतेऽपि शक्यत एव प्रकारान्तरेण वेदितुमुपदेष्टुं चाऽऽत्मा इति भावः ॥
5. इति शब्दो नास्ति आ ॥
6. यद्यपि 'अविषयं च' इत्येव भूयःसु मुद्रितपुस्तकेषूपलभ्यते पाठः, तथापि 'अविषयः' इत्येव साधीयानिति तथादृतः ॥



विदितात् अन्यदेव हि। विदितं नाम यद् विदिक्रियया अतिशयेन आप्तं विदिक्रियाकर्मभूतम्[1]। क्वचित् किंचित् कस्यचित् विदितं स्यादिति सर्वमेव[2] व्याकृतं[3] विदितमेव[4]। तत् तस्मादन्यदेवेत्यर्थः। अविदितम् अज्ञातं तर्हीति प्राप्ते[5] आह। अथो अपि[6] अविदितात् विदितविपरीतात् **अव्याकृतात्**[7] अविद्यालक्षणात्[8] व्याकृतबीजात्। 'अधि' इत्युपर्यर्थे। लक्षणया अन्यत् इत्यर्थः[9]। यद्धि यस्मादध्युपरि भवति तत् तस्मादन्यदिति प्रसिद्धम् ॥

### हेयोपादेयव्यतिरिक्तं ब्रह्म---

२४. यद्विदितं तदल्पं मर्त्यं[10] दुःखात्मकं चेति हेयम्। तस्माद् 'विदितात् अन्यत्' ब्रह्मेत्युक्ते तु अहेयत्वमुक्तं स्यात्। तथा 'अविदितात् अधि' इत्युक्ते अनुपादेयत्वम् उक्तं स्यात्। कार्यार्थं हि कारणम् अन्यत् अन्येन उपादीयते। अतश्च न वेदितुरन्यस्मै प्रयोजनाय अन्यत् उपादेयं भवतीति ॥

1. 'तद्विदिक्रिया ......' आ ॥ 2. वेद्यस्वभावम् इति शेषः ॥
3. नामरूपाभ्यां विभक्तम् ॥
4. अस्यानन्तरम् 'तद्' इत्यधिकम् आ ॥
5. न हि परस्परप्रतिषेधरूपाभ्यां विदिताविदिताभ्यां प्रकारान्तरं वस्तु संभवतीति पूर्वपक्षिणो भावः ॥
6. 'अपि' इति नास्ति आ ॥ 7. अविभक्तनामरूपात् ॥
8. अविद्याकल्पितात् इत्यर्थः। अविद्याकल्पितं हि नामरूपबीजमव्याकृतशब्दवाच्यम् ॥ सू. भा. २-१-१४, बृ. भा. १-४-७.
9. अव्याकृतस्य देशकालातीतत्वे सति तदुपरिस्थितस्य कस्यचिदसंभवे वाच्यार्थस्वीकारानुपपत्तौ तदन्यत् ततो विलक्षणस्वभावम् इत्युपक्रमानुसारेण लक्षणार्थोऽङ्गीकार्य इति भावः ॥
10. अल्पम्- अविद्याकालभावि मर्त्यम्-कालपरिच्छिन्नत्वादेव विनाशीत्यर्थः ॥ छा. भा. ७-२४-१.

**विदिताविदिताभ्यामन्यदित्यत्र वाक्यार्थः—**

२५. एवं विदिताविदिताभ्याम् अन्यत् इति हेयोपादेयप्रतिषेधेन स्वात्मनोऽनन्यत्वात् ब्रह्मविषया[1] जिज्ञासा शिष्यस्य निवर्तिता[2] स्यात् । न ह्यन्यस्य स्वात्मनो विदिताविदिताभ्यामन्यत्वं वस्तुनः संभवतीति **'आत्मा ब्रह्म' इत्येष वाक्यार्थः** । 'अयमात्मा ब्रह्म' (बृ. ४–४–५), 'य आत्मा अपहतपाप्मा' (छा. ८–७–१), 'यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः' (बृ. ३–४–१) इत्यादिश्रुत्यन्तरेभ्यश्चेति ॥

**प्रत्यगात्मब्रह्मैक्योपदेशः संप्रदायागतः—**

२६. एवं सर्वात्मनः सर्वविशेषरहितस्य चिन्मात्रज्योतिषो ब्रह्मत्वप्रतिपादकस्य वाक्यार्थस्य आचार्योपदेशपरम्परया प्राप्तत्वमाह—इति शुश्रुमेत्यादि । **ब्रह्म चैवम् आचार्योपदेशपरम्परयैवाधिगन्तव्यम्** न तर्कतः[3] प्रवचनमेधाबहुश्रुततपोयज्ञादिभ्यश्च[4] इति एवम् शुश्रुम श्रुतवन्तो वयं पूर्वेषाम् आचार्याणां वचनम् । ये आचार्याः नः अस्मभ्यं तत् ब्रह्म व्याचचक्षिरे व्याख्यातवन्तः विस्पष्टं कथितवन्तः, तेषाम्[5] इत्यर्थः ॥ ४ ॥

**उपास्यरूपं ब्रह्मणो न पारमार्थिकम्**

**यद् वाचाऽनभ्युदितं**
**येन वागभ्युद्यते ।**

1. 'स्वात्मनोऽन्यब्रह्मविषया' इति आ ॥ पाठो न युक्तः ॥

2. यावद्धि स्वात्मनो भिन्नत्वेन परिकल्पितं भवति जिज्ञास्यं ब्रह्म तावन्न जिज्ञासानिवृत्तिः ॥ जिज्ञासाया नियमेनात्मान्यविषयकत्वात् । आत्मनि तु स्वतःसिद्धे जिज्ञासानुपपत्तिरिति ब्रह्मणः स्वात्मनोऽनन्यत्वे सति नान्तरीयकी जिज्ञासानिवृत्तिरित्यर्थः ॥

3. क. १–२–९.

4. क. १–२–२३ ; मु. ३–२–३ ; गी. ११–५३. अत्र प्रवचनमेधादिभिरशक्याधिगमत्ववचनं तेषामाचार्योपदेशद्वारेणैव फलकारित्वकथनार्थम् ॥ गी. ४–३४.

5. 'तेषां वचनम् शुश्रुम' इति संबन्धः ॥



**तदेव ब्रह्म त्वं विद्धि**
**नेदं यदिदमुपासते ॥ ५ ॥**

**ब्रह्मणः प्रत्यगात्माभिन्नत्वे शङ्का —**

२७. 'अन्यदेव तद्विदितादथो अविदितादधि' इत्यनेन वाक्येन आत्मा ब्रह्मेति प्रतिपादिते श्रोतुराशङ्का जाता[1] 'कथं न्वात्मा ब्रह्म ? आत्मा हि नामाधिकृतः कर्मण्युपासने च संसारी,[2] कर्म, उपासनं वा साधनम् अनुष्ठाय ब्रह्मादिदेवान् स्वर्गं वा प्राप्तुमिच्छति । तत् तस्मादन्य उपास्यो **विष्णुः, ईश्वरः[3], इन्द्रः, प्राणो** वा ब्रह्म भवितुमर्हति, न त्वात्मा । लोकप्रत्ययविरोधात्[4] । यथान्ये तार्किकाः ईश्वरादन्य[5] आत्मेत्याचक्षते । तथा कर्मिणः 'अमुं यजामुं यज' [6] (बृ. १–४–६) इत्यन्या एव देवता उपासते । तस्मात् युक्तं यद् विदितमुपास्यं[7] तद् ब्रह्म

1. 'तत्कथं त्वात्मा' आ ॥

2. 'कर्मणि उपासने चाधिकृतः संसारी' इति योजना । एतदनु 'यः' इति द्रष्टव्यम् ॥

3. विष्ण्वादयोऽपीशनशीला एवेत्यतोऽत्र 'ईश्वरः' इति शिवो ग्राह्यः । 'ईश्वरः सर्वभूतानाम्' इति श्रुतेरीश्वरशब्दस्य तस्मिन् प्रसिद्धत्वात् भगवच्छब्दस्य विष्णाविव ॥

4. आत्मा उपासक एव न तूपास्य इति हि लौकिकप्रत्ययः ॥

5. अत्रेश्वरशब्द उपास्यदेवतापरः । तार्किका ह्यात्मा द्विविधः, जीवात्मा परमात्मेति चेत्याचक्षते ॥

6. नामशस्त्रस्तोत्रकर्मादीनां भेदेन भिन्नभिन्नानेवेन्द्रादिदेवान् मन्यमाना याज्ञिका एवमाहुरिति भावः । अत्र तार्किककर्मिमात्रग्रहणात् आचार्यकाले तटस्थेश्वरवादिनो वेदान्तिनो नासन्नित्युन्नीयते ॥

7. विदितमुपास्यमिति व्याख्यानव्याख्येयभावेनोक्तम् । विदितमेव ब्रह्म भवेत् न ततोऽन्यत् यथाहाऽऽचार्य इति शिष्यस्याऽऽशङ्का ॥

भवेत्, ततोऽन्य उपासकः इति । तामेताम् आशङ्कां शिष्यलिङ्गेनोपलक्ष्य तद्वाक्याद्वा[1] आह ॥

## प्रत्यक्तत्त्वमेव ब्रह्मेत्यवधारणम् —

२८. मैवं शङ्किष्ठाः । यत् चैतन्यमात्रसत्ताकम्[2] वाचा वागिति जिह्वामूलादिष्वष्टसु[3] स्थानेषु विषक्तम् आग्नेयं[4] वर्णानामभिव्यञ्जकं करणम् । वर्णाश्च अर्थसङ्केतपरिच्छिन्ना एतावन्त एवंक्रमप्रयुक्ता इत्येवं तदभिव्यङ्ग्यः[5] शब्दः पदं वाक् इत्युच्यते । 'अकारो वै सर्वा वाक् सैषा स्पर्शान्तस्थोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति' (ऐ. आ. २-३-६) इति श्रुतेः[6] । मितम् अमितं स्वरः सत्यानृते[7] एव[8] विकारो

1. यद्यपि श्रुत्या शिष्यवाक्यमत्र नोपनिबद्धम् तथापि ग्रन्थाद् बहिरेव तद्वाक्यं द्रष्टव्यम् । तद्वाक्यादवगम्य इति वा, शिष्यमुखलिङ्गेनानुमायेति वा कल्पनीयमित्यभिप्रायः ।

2. चैतन्यस्वरूपातिरिक्ता सत्ता यस्य नास्तीत्यभिप्रायः ॥

3. "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" इत्युक्तेषु, (आ॥ गि॥) छा. भा. ७-२-१ ॥ केन-छान्दोग्ययोरुभयोरपि भाष्ययोः 'जिह्वामूलादि' इत्येवारम्भादुन्नीयते क्वचिदाकरे जिह्वामूलाद्यनुक्रमो दृष्ट इति ॥

4. अग्निदेवताकम् । अग्निर्हि वागधिष्ठात्री देवता ॥

5. तदभिव्यङ्ग्यः इति । वाक्करणाभिनिर्वर्त्य इत्यर्थः । करणं शब्दश्च वागित्युच्यते इति तृतीयमन्त्रभाष्यानुरोधात् । अत्र तदभिव्यङ्ग्य इति वर्णाभिव्यङ्ग्य इति प्रकल्प्य स्फोटवादो नोद्भाव्यः । सूत्रभाष्य(१-३-२८)विरोधात् ॥

6. ऐतरेयश्रुतौ 'सैषा स्पर्शोष्मभिर्व्यज्यमाना' इत्येव पाठो दृश्यते । सैषा वाक् शब्दरूपा तत्तद्रूपेण व्यज्यमाना नानारूपा भवतीत्यर्थः ॥

7. मितम् – ऋगादि । नियताक्षरपादावसानत्वात् । अमितम् यजुरादि । अनियताक्षरपादावसानत्वात् । स्वरः साम तत्सन्धिश्च । सत्यम् ओंकारः । अनृतम् निषेधार्थको नकारः ॥ ऐ. आ. २-३-६.

8. 'एष' वा ॥



यस्याः, तया वाचा पदत्वेन परिच्छिन्नया करणगुणवत्या[1] अनभ्युदितम् अप्रकाशितम्, अनभ्युक्तम् । येन ब्रह्मणा विवक्षितेऽर्थे सकरणा वाक् अभ्युद्यते चैतन्यज्योतिषा प्रकाश्यते । प्रयुज्यते इत्येतत् । 'यद्वाचो ह वाक्' (१-२) इत्युक्तम् । 'वदन् वाक्'[2] (बृ. १-४-७), 'यो वाचमन्तरो यमयति' (बृ. ३-७-१७) इत्यादि च **वाजसनेयके** । 'या वाक्पुरुषेषु सा घोषेषु प्रतिष्ठिता कश्चित् तां वेद ब्राह्मणः' इति प्रश्नमुत्पाद्य प्रतिवचनमुक्तम् 'सा वाग् यया स्वप्ने भाषते' (?) इति[3] । सा हि वक्तुर्वक्तिर्नित्या वाक् चैतन्यज्योतिःस्वरूपा[4] । 'न हि वक्तुर्वक्तेर्विपरिलोपो विद्यते' (बृ. ४-३-२६) इति श्रुतेः । तदेव[5] आत्मस्वरूपं ब्रह्म निरतिशयं भूमाख्यं[6] बृहत्त्वाद्[7] ब्रह्मेति विद्धि विजानीहि त्वम् । यैर्वागाद्युपाधिभिः 'वाचो ह वाक्', 'चक्षुषश्चक्षुः', 'श्रोत्रस्य श्रोत्रम्', 'मनसो मनः', 'कर्ता', 'भोक्ता', 'विज्ञाता', 'नियन्ता', 'प्रशासिता', 'विज्ञानमानन्दं ब्रह्म' —इत्येवमादयः संव्यवहारा असंव्यवहार्ये[8] निर्वि-

1. करणं गुणः उपसर्जनं यस्याः सा । वाग्रूपकरणनिर्वर्त्यापि पदरूपैव वागित्युच्यते प्राधान्येनेत्यर्थः ॥

2. वाक् इत्यस्य वक्तेत्यर्थः ॥

3. इदं वचनं कुत्रत्यमिति न विज्ञायते । ऐ. भा. २-१. 'तच्चक्षुः पुरुषे येन स्वप्ने पश्यति' इति भाष्यान्तरस्थं वाक्यमप्येतदाकरस्थमित्यनुमीयते ॥

4. वक्तुर्वक्तिरिति च चैतन्यस्वरूपस्यैव व्यपदेशः । अग्नेरौष्ण्यमितिवत् इत्यभिप्रायः ॥

5. 'येन वागभ्युद्यते तदेव' इति व्यवहितेन संबन्धः ॥

6. छा. ७-२४-१.

7. निरतिशयबृहत्त्वात्, निर्विशेषाद्वितीयात्मचैतन्यमेव ब्रह्मेति भावः ॥

8. सर्वसंव्यवहाराविषये । नियन्तव्याद्यपेक्षत्वात् नियन्त्रादिशब्दा अपि ब्रह्मणि साक्षान्न वर्तन्ते । एवं ब्रह्म, आत्मा – इत्यादिशब्दा अपि न तस्य वाचका इत्यर्थः ॥ भा. भा. ३६ ; बृ. भा. १-४-७ ; छा. भा. ७-१-३.

शेषे परे साम्ये ब्रह्मणि प्रवर्तन्ते तान्[1] व्युदस्य आत्मानमेव निर्विशेषं विद्धीति एवशब्दार्थः ॥

**नेदमिति निषेधस्यार्थः --**

२९. नेदं ब्रह्म यद् इदमिति उपाधिभेदविशिष्टमनात्मा ईश्वरादि[2] उपासते ध्यायन्ति। 'तदेव ब्रह्म त्वं विद्धि' इत्युक्तेऽपि 'नेदं ब्रह्म' इत्यनात्मनोऽब्रह्मत्वं पुनरुच्यते नियमार्थम्,[3] अन्यब्रह्मबुद्धिपरिसंख्यानार्थं[4] वा ॥५॥

**यन्मनसा न मनुते**
**येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि**
**नेदं यदिदमुपासते ॥ ६ ॥**

**वाच इव मनसोऽप्यविषयो ब्रह्म --**

३०. 'यन्मनसा न मनुते', 'मनः' इत्यन्तःकरणं बुद्धिमनसोरेकत्वेन गृह्यते। मनुतेऽनेनेति मनः सर्वकरणसाधारणम्। सर्वविषयव्यापकत्वात्[5]। 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' (बृ. १-५-३) इति श्रुतेः कामादिवृत्ति-

1. उपाधीन् ॥ 2. आदिशब्देन इन्द्रप्राणादिग्रहणम् ॥

3. 'नियमार्थम्' इति। तद्ब्रह्मैवेति नियमार्थमित्यर्थः। इदंप्रत्ययविषयेऽपि हि ब्रह्मबुद्धौ लब्धावकाशायां प्रत्यगात्मनि ब्रह्मत्वायोगोऽपि शङ्क्येतेति तत्परिहारार्थमेव तु नेदमित्यनात्मनोऽब्रह्मत्वमुच्यत इति भावः ॥

4. एवकारलभ्यं स्वरसतरमर्थान्तरमाह – 'अन्यबुद्धिपरिसंख्यानार्थं वा' इति। अनात्मैव ब्रह्म स्यान्नाऽऽत्मा इति मिथ्याबुद्धिं निवारयितुं वेत्यर्थः ॥

5. तद्व्यापारं विना कस्यापि करणव्यापारस्य साफल्याभावादित्यर्थः। 'अन्यत्र मना अभूवं नादर्शम्' इत्यादि(बृ. १-५-३)श्रुतेः ॥



मन्मनः। तेन[1] मनसा यत् चैतन्यज्योतिर्मनसोऽवभासकं न मनुते न संकल्पयति नापि निश्चिनोति लोकः[2]। मनसोऽवभासकत्वेन नियन्तृत्वात्[3]। सर्वविषयं प्रति प्रत्यगेवेति[4] स्वात्मनि न प्रवर्ततेऽन्तःकरणम्। अन्तःस्थेन हि चैतन्यज्योतिषाऽवभासितस्य[5] मनसो मननसामर्थ्यम्। तेन सवृत्तिकं मनः येन ब्रह्मणा मतं विषयीकृतं व्याप्तम्[6] आहुः कथयन्ति ब्रह्मविदः। तस्मात् तदेव मनस आत्मानं प्रत्यक्चेतयितारं ब्रह्म (त्वं) विद्धि। 'नेदम्' इत्यादि पूर्ववत्[7] ॥ ६ ॥

**यच्चक्षुषा न पश्यति**
**येन चक्षूंषि पश्यति।**
**तदेव ब्रह्म त्वं विद्धि**
**नेदं यदिदमुपासते ॥७॥**

३१. यत् चक्षुषा न पश्यति न विषयीकरोति अन्तःकरणवृत्तिसंयुक्तेन लोकः[8]। येन चक्षूंपि अन्तःकरणवृत्तिभेदभिन्नाश्चक्षु-[9]

1. तेन वृत्तिमता ॥ 2. 'लोकः' इति नास्ति वा. ॥

3. 'यो मनोऽन्तरो यमयति' (बृ. ३-७-२०) इति श्रुतेः ॥

4. मनसो नियमेन पराग्विषयविषयकत्वात्, ब्रह्मणश्च सर्वविषयं प्रतीव मनः प्रत्यपि च प्रत्यक्त्वादित्यर्थः ॥

5. चिदाभासविशिष्टमेव हि विकल्पाध्यवसायादिकरणे समर्थं मनः ॥

6. न केवलं चिदाभासं चिद्व्याप्तं च मनः। अतः स्वव्यापकं परमार्थतः स्वात्मभूतं च न व्याप्नोतीत्यर्थः॥ तै. भाष्ये (२-१) [illegible] द्रष्टव्यम् ॥

7. नियमार्थं परिसंख्यानार्थं वेति व्याख्येयमित्यर्थः ॥

8. 'लोकः' इति नास्त्यत्र, 'चक्षुर्वृत्तीः पश्यती'त्येतदनन्तरं तु दृश्यते आ. ॥

9. अन्तःकरणवृत्तिभेदाः कामादयः। तदनु भिन्नाश्चक्षुर्वृत्तयोऽपीति बहुवचनप्रयोग इति भावः ॥

[illegible]ीः पश्यति चैतन्यात्मज्योतिषा विषयीकरोति व्याप्नोति । तदेवेत्यादि पूर्ववत् ॥ ७ ॥

**यच्छ्रोत्रेण न शृणोति**
**येन श्रोत्रमिदꣳ श्रुतम् ।**
**तदेव ब्रह्म त्वं विद्धि**
**नेदं यदिदमुपासते ॥ ८ ॥**

३२. यत् श्रोत्रेण न शृणोति दिग्देवताधिष्ठितेन[2] आकाशकार्येण मनोवृत्तिसंयुक्तेन न विषयीकरोति लोकः । येन श्रोत्रमिदं श्रुतं यत् प्रसिद्धं[3] चैतन्यात्मज्योतिषा विषयीकृतम् । तदेवेत्यादि पूर्ववत् ॥ ८ ॥

**यत्प्राणेन न प्राणिति**
**येन प्राणः प्रणीयते ।**
**तदेव ब्रह्म त्वं विद्धि**
**नेदं यदिदमुपासते ॥ ९ ॥**

३३. यत् प्राणेन घ्राणेन पार्थिवेन नासिकापुटान्तरवस्थितेन अन्तःकरणप्राणवृत्तिभ्यां सहितेन[4] न प्राणिति गन्धवत् न विषयीकरोति । येन चैतन्यात्मज्योतिषा अवभास्यत्वेन स्वविषयं प्रति प्राणः प्रणीयते 'तदेव' इत्यादि सर्वं समानम् ॥ ९ ॥

इति प्रथमः खण्डः

---

1. इदं वाक्यं त्रुटितम् आ. ॥

2. सर्वमपि बाह्येन्द्रियं तत्तद्देवताधिष्ठितं स्वविषयभूतभूतारब्धं मनोवृत्तिसंयुक्तं च नात्मानं विषयीकरोतीति विशेषणत्रयं सर्वत्रानुसंधेयमत्रत्यभाष्यानुसारेण ॥

3. 'इदं श्रोत्रं यत्प्रसिद्धम्' इति संबन्धः ॥

4. सर्वेन्द्रियप्रवृत्तीनामपि प्राणपूर्वकत्वं पूर्वमुक्तम् (भा. भा. १) इहाप्यनुसंधेयम् ॥



## अथ द्वितीयः खण्डः

ब्रह्म ज्ञानस्यापि न विषयः

**यदि मन्यसे सुवेदेति दभ्रमेवापि[1] नूनम् ।**
**त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेष्वथ**
**नु मीमांस्यमेव ते मन्ये विदितम् ॥ १ ॥**

आचार्यवचनाभिप्रायः––

३४. एवं हेयोपादेयविपरीतस्त्वम् आत्मा ब्रह्म इति प्रत्यायितः शिष्यः 'अहमेव ब्रह्मेति सुष्ठु वेदाहम्' इति मा गृह्णीयात् इत्याशङ्क्याऽऽहाऽऽचार्यः शिष्यबुद्धिविचालनार्थं यदीत्यादि[2] ॥

नन्विष्टैव सुवेदाहम् इति निश्चिता प्रतिपत्तिः । सत्यमिष्टा निश्चिता प्रतिपत्तिः, न हि[3] 'सुवेदाहम्' इति । यद्धि वेद्यं वस्तु विषयीभवति तत् सुष्ठु[4] वेदितुं शक्यम् दाह्यमिव दग्धुम् अग्नेर्दग्धुः । न त्वग्नेः स्वरूपमेव । **सर्वस्य हि वेदितुः स्वात्मा ब्रह्म इति सर्ववेदान्तानां सुनिश्चितोऽर्थः** । इह च तदेव[5] प्रतिपादितं प्रश्नप्रतिवचनोक्त्या 'श्रोत्रस्य श्रोत्रम्' (१–२) इत्याद्यया । 'यद्वाचाऽनभ्युदितम्' (१–५) इति च

---

1. 'दहरमेवापि' आ. ॥

2. एवं वा. ॥ 'अहमेव ब्रह्मेति सुष्ठु वेदाहं माम् इति गृह्णीयात् इत्याशङ्क्याचार्यः शिष्यबुद्धिविचालनार्थं यदीत्याह' इति तु आ. ॥

3. हिशब्दस्त्वर्थे ॥

4. संशयविपर्ययरहितं यथा तथा ॥

5. श्रोतुरात्मैव ब्रह्मेत्येतदेव ॥

विशेषतोऽवधारितम्[1] । ब्रह्मवित्संप्रदायनिश्चयश्चोक्तः[2] 'अन्यदेव तद्विदितादथो अविदितादधि' (१-४) इति । उपन्यस्तम् उपसंहरिष्यति[3] च 'अविज्ञातं विजानतां विज्ञातमविजानताम्' (२-३) इति । तस्माद् युक्तमेव शिष्यस्य 'सुवेद' इति बुद्धिं निराकर्तुम् । न हि वेदिता वेदितुर्वेदितुं शक्यः, अग्निरिव दग्धुमग्नेः[4] । न चान्यो वेदिता ब्रह्मणोऽस्ति यस्य वेद्यमन्यत् स्याद्ब्रह्म । 'नान्यदतोऽस्ति विज्ञातृ' (बृ. ३-८-११) इत्यन्यो विज्ञाता प्रतिषिध्यते[5] । तस्मात् सुष्ठु वेदाहं ब्रह्मेति प्रतिपत्तिर्मिथ्यैव । तस्माद्युक्तमेवाहाचार्यो यदीत्यादि ॥

## ब्रह्मप्रतिपत्तेरासुरी प्रकृतिः प्रतिबन्धः —

३५. यदि कदाचित् मन्यसे सुवेद इति सुष्ठु वेदाहं ब्रह्म इति । कदाचित् यथाश्रुतं दुर्विज्ञेयमपि क्षीणदोषः सुमेधाः कश्चित् प्रतिपद्यते कश्चिन्न इति साशङ्कमाह 'यदि' इत्यादि । दृष्टं च 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म' (छा. ८-७-४) इत्युक्ते प्राजापत्यः पण्डितोऽपि **असुरराड् विरोचनः** स्वभावदोषवशात् अनुपपद्यमानमपि विपरीतमर्थं शरीरम् आत्मेति प्रतिपन्नः । तथा **इन्द्रो देवराट्** सकृद् द्विस्त्रिरुक्तं च प्रतिपद्यमानः स्वभावदोष-

---

1. वागादीनां प्रकाशकं तदात्मैव ब्रह्म न तु तद्विषयभूतमित्येतद्विशेषतोऽवधारितम् 'तदेव' इतीत्यर्थः ॥

2. ब्रह्मणोऽविषयत्वात्तस्मिन्नध्यारोपितसर्वविषयनिराकरणमात्रं कर्तव्यं न तु ब्रह्मविज्ञाने यत्न इति ब्रह्मवित्संप्रदायः, उपदेशविशेष आगमशब्दवाच्यः ॥

3. उपक्रमानुसारेणैव ब्रह्मणोऽविषयत्वमुपसंहारेऽपि प्रतिपादयिष्यति ॥

4. 'अग्निर्दग्धुरिव दग्धुमग्नेः' इति वा. ॥

5. ब्रह्मण एवाविद्यावस्थायां वेदितृत्वेन कल्पना, विदिते तु ब्रह्मणि वेदितैव ब्रह्म स्यादिति भावः ॥ सू. भा. १-१-४ सूत्रान्ते उदाहृतो द्वितीयः श्लोको द्रष्टव्यः ॥



क्षयम् अपेक्ष्य[1] चतुर्थे पर्याये प्रथमोक्तमेव[2] ब्रह्म प्रतिपन्नवान्[3] । लोकेऽपि एकस्माद्गुरोः शृण्वतां कश्चित् यथावत् प्रतिपद्यते, कश्चिदयथावत्,[4] कश्चिद्विपरीतं, कश्चिन्न प्रतिपद्यते[5] । किमु वक्तव्यमतीन्द्रियमात्मतत्त्वम् । अत्र हि विप्रतिपन्नाः सदसद्वादिनस्तार्किकाः[6] सर्वे । तस्मात् विदितं ब्रह्मेति सुनिश्चितोऽक्तमपि विषमप्रतिपत्तित्वात् 'यदि मन्यसे' इत्यादि साशङ्कं वचनं युक्तमेवाऽऽचार्यस्य ॥

## ब्रह्म स्वतो निर्धर्मकमेव——

३६. दभ्रम्[7] अल्पमेवापि नूनं त्वं वेत्थ जानीषे ब्रह्मणो रूपम् । किमनेकानि ब्रह्मणो रूपाणि महान्त्यर्भकाणि च येनाऽऽह 'दभ्रमेव' इत्यादि ? बाढम् । अनेकानि हि नामरूपोपाधिकृतानि ब्रह्मणो रूपाणि न स्वतः[8] । स्वतस्तु 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' (क. १-३-१५) इति शब्दादिभिः सह रूपाणि प्रतिषिध्यन्ते । ननु येनैव धर्मेण यद् रूप्यते तदेव तस्य स्वरूपमिति ब्रह्मणोऽपि येन विशेषेण निरूपणम् तदेव तस्य स्वरूपं स्यात् । अत उच्यते चैतन्यं पृथिव्यादीनामन्यतमस्य सर्वेषां विपरिणतानां वा धर्मो न भवति, तथा

---

1. ब्रह्मचर्यादिसाधनेन तत्क्षये सति ॥

2. प्रजापतिना प्रतिपर्यायमन्यदन्यद्ब्रह्मेति नोक्तम् । शिष्येणैव तु तथा तथा प्रतिपन्नं दोषवशादिति भावः । सू. भा. १-३-१९, छा. भा. ८-१२-१.

3. आसुरी प्रकृतिः स्वभावदोषः । तत्क्षये च दैव्याः प्रकृतेरुद्भवः, ततश्च ब्रह्मप्रतिपत्तिरित्येतत्सूचनार्थं दैवी च प्रकृतिः पुण्यपरिपाकेनैव लभ्येति सूचनार्थं च यदीति साशङ्कवचनमित्यभिप्रायः ॥ 4. संशयितमित्यर्थः ॥

5. अत्यन्तमूढत्वात्किमपि न प्रतिपद्यत इत्यर्थः ॥

6. सत्कार्यवादिनः साङ्ख्यादयोऽसत्कार्यवादिनो वैशेषिकादयश्चेत्यर्थः ॥

7. 'दहरम्' इति सर्वत्र दभ्रस्थाने वा ॥ 'यद्येवं मन्यसे तर्हि दभ्रमेव त्वं वेत्थ' इति संबन्धः ॥

8. अद्वितीयनिर्विशेषत्वमेव ब्रह्मणस्तात्त्विकं रूपम् , अन्यत्सर्वमतात्त्विकमल्पं चेत्यर्थः ॥ छा. ७-२४-१.

श्रोत्रादीनामन्तःकरणस्य च धर्मो न भवतीति ब्रह्मणो रूपमिति। ब्रह्म रूप्यते चैतन्येन। तथा चोक्तम् 'विज्ञानमानन्दं ब्रह्म' (बृ. ३-९-२८-७), 'विज्ञानघन एव' (बृ. २-४-१२), 'सत्यं ज्ञानमनन्तं ब्रह्म'' (तै. २-१), 'प्रज्ञानं ब्रह्म' (ऐ. ३-१-३)-इति च ब्रह्मणो रूपं निर्दिष्टं श्रुतिषु[2]॥

सत्यमेवम्। तथापि तदन्तःकरणदेहेन्द्रियोपाधिद्वारेणैव विज्ञानादिशब्दैर्निर्दिश्यते। तदनुकारित्वाद्देहादिवृद्धिसंकोचच्छेदादिषु नाशेषु[3] च न स्वतः[4]। स्वतस्तु 'अविज्ञातं विजानतां विज्ञातमविजानताम्' (२-३) इति स्थितं भविष्यति॥

३७. 'यदस्य ब्रह्मणो रूपम्' इति पूर्वेण संबन्धः। न केवलम् अध्यात्मोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूपं त्वमल्पं वेत्थ। यदप्यधिदैवतोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूपं देवेषु वेत्थ त्वम्, तदपि नूनं दभ्रमेव

---

1. ब्रह्मेति नास्ति आ॥

2. अतश्चैतन्यमेव ब्रह्मणो रूपमिति युक्तमिति पूर्ववादिनो भावः॥

3. नाशेष्विति बहुवचनं किमर्थमिति चिन्त्यम्। 'छेदनाशेषु' इति समस्त पाठो वा कल्प्यः॥ 'खमिव' न स्वतः इति क्वचित् पाठः। तत्र मा. का. ३-९ अनुसंधेया। अत्र यद्यपि ब्रह्म चैतन्येन रूप्यत इति तदेव ब्रह्मणो रूपं भवितुमर्हतीत्येतावन्मात्रं पूर्वपक्षिणा शङ्कितम्, तथा च सिद्धान्तिनापि तदेव प्रतिवक्तव्यम्, तथा यथा देहाद्यनुकारित्वात् तद्धर्मैः रूप्यत इव ब्रह्म, तेन च तद्धर्मवाचकैरपि व्यपदिश्यते लोके-वर्धते, संकुचति, छिद्यते, नश्यति इत्यादिभिः शब्दैः, एवं विज्ञानमानन्दम् इत्यादिशब्दैरप्यन्तःकरणवृत्तिवाचकैर्व्यपदिश्यते श्रुत्या, अन्तःकरणोपाध्यनुकारित्वात् इति दृष्टान्तत्वेन देहादि धर्मानुकारित्वमप्युपन्यस्तमिति न दोषः॥

4. स्यादेतत्। व्यवह्रियतां नामानात्मधर्मैरात्मा लौकिकैरज्ञानसंदूषितैः कथं तु निर्दोषा श्रुतिस्तदनुसारेण ब्रह्मविज्ञानादिरूपत्वेन व्यवहरेदिति। तत्राऽऽह-स्वतस्तु इति। विज्ञानानन्दादिशब्दैरपि लक्ष्यत एव ब्रह्म न तूच्यते। सोपाधिकमेव खलु ब्रह्म वाच्यं भवतीति भावः। भा. भा. २८; तै. भा. २-१. निषेधवचनैरप्यवाच्यमेव ब्रह्म॥ मा. का. भा. २-३२.



वेत्थ इति मन्येऽहम्। तदपि च देवेषु[1] उपाधिपरिच्छिन्नत्वाद् दभ्रत्वान्न निवर्तते[2]। यत्तु विध्वस्तसर्वोपाधिविशेषं शान्तमनन्तमेकमद्वैतं भूमाख्यं नित्यं ब्रह्म न तत् सुवेद्यम्[3] इत्यभिप्रायः। यत एवम् अथ नु तस्मात् मन्ये अद्यापि मीमांस्यं विचार्यमेव ते तव ब्रह्म[4]॥ १॥

**नाहं मन्ये सुवेदेति**
**नो न वेदेति वेद च।**
**यो नस्तद्वेद तद्वेद**
**नो न वेदेति वेद च ॥ २॥**

**आगमाचार्योपदेशस्वानुभवसंगानात्सम्यग्ज्ञानं भवति--**

३८. एवमाचार्योक्तः शिष्य **एकान्त उपविष्टः समाहितः सन् यथोक्तमाचार्येणागमम्**[5] **अर्थतो विचार्य तर्कतश्च निर्धार्य स्वानुभवं कृत्वा**[6], आचार्यसकाशमुपगम्योवाच मन्येऽहमथेदानीं विदितं ब्रह्मेति। कथमिति? शृणुत॥

---

1. 'तदपि, च' इत्येतस्मात् प्राक् 'यदध्यात्मं यदपि देवेषु' (वा). 'यदध्यात्मं यदधिदैवम्' (आ.)। 'यदध्यात्मं यदधिदेवेषु' (अ.) -इति च त्रिविधाः पाठा अधिका दृश्यन्ते॥

2. अत्र नायमभिप्राय आचार्यस्य यदस्याध्यात्मोपाधिपरिच्छिन्नं रूपं यच्चाधिदैवतोपाधिपरिच्छिन्नं रूपम् तदल्पमेव, परिपूर्णतया तु वेदितव्यं द्वयमपीति। किं तर्हि, यदि मन्यसे एतदुपाधिद्वयपरिच्छिन्नमेव ब्रह्मतत्त्वम्, अहं च तद्वेदेति, तर्हि न त्वं सम्यग्दर्शनवानिति। निरुपाधिकं हि विदिताविदिताभ्यामन्यद् ब्रह्म वेदितव्यतया प्रकृतम्। तद्वेदनमेव पूर्णम्, पूर्णतत्त्वविषयकत्वादित्याशयः॥

3. न केनापि विषयीकर्तुं क्षमम्॥

4. न त्वया याथातथ्यतो विदितं ब्रह्मेत्यर्थः॥

5. सांप्रदायिकोपदेशमन्यदेव तद्विदितादित्यादिरूपम्॥

6. श्रवणमनननिदिध्यासनानां संगानं संपाद्येत्यर्थः। यद्यप्यागमबलादेवानुभवोऽपि जायेतैव। तथापि येषां तन्मात्रेणानुभवो न जायते तेषामुपपत्तिर्निदिध्यासनं चाप्यनुभवाङ्गत्वेनापेक्ष्यते इत्याशयेनेदमुक्तम्॥ सू. भा. २-१-६.

नाहं मन्ये सुवेदेति नैवाहं मन्ये सुवेद ब्रह्मेति। 'नैव तर्हि विदितं त्वया ब्रह्म' इत्युक्त आह। नो न वेदेति वेद च। वेद च इति चशब्दान्न वेद च ॥

ननु विप्रतिषिद्धं नाहं मन्ये सुवेदेति नो न वेदेति वेद चेति। यदि न मन्यसे सुवेदेति कथं मन्यसे वेदैवेति? अथ मन्यसे वेदैवेति कथं न मन्यसे सुवेदेति? एकं वस्तु येन ज्ञायते तेनैव तदेव वस्तु न सुविज्ञायत इति विप्रतिषिद्धं संशयविपर्ययौ वर्जयित्वा[1]। न च ब्रह्म संशयितत्वेन ज्ञेयं विपरीतत्वेन वेति नियन्तुं शक्यम्। संशयविपर्ययौ हि सर्वत्रानर्थकरत्वेनैव प्रसिद्धौ ॥

एवमाचार्येण विचाल्यमानोऽपि शिष्यो न विचचाल। 'अन्यदेव तद्विदितादथो अविदितादधि' (१-४) इत्याचार्योक्तागमसंप्रदायबलात्। उपपत्त्यनुभवबलाच्च। जगर्ज च ब्रह्मविद्यायां दृढनिश्चयतां दर्शयन् आत्मनः। कथमिति? उच्यते। यो यः कश्चित् नः अस्माकं सब्रह्मचारिणां मध्ये तत् उक्तं वचनं तत्त्वतो वेद स तत् ब्रह्म वेद। किं पुनस्तद्वचनमिति? अत आह। 'नो न वेदेति वेद च' इति। यदेव 'अन्यदेव तद्विदितादथो अविदितादधि' इत्युक्तं तदेव[2] वस्तु अनुमानानुभवाभ्यां संयोज्य निश्चितं वाक्यान्तरेण 'नो न वेदेति वेद च' इत्यवोचत् आचार्यबुद्धिसंवादार्थं[3] मन्दबुद्धिग्रहणव्यपोहार्थं[4] च ॥ २ ॥

---

1. संशयोऽपि द्विकोटिकमनेककोटिकं वा ज्ञानं, यथा 'स्थाणुर्वा पुरुषो वा तदन्यो वा' इति। विपर्ययश्चान्यथाज्ञानं यथा स्थाणौ पुरुष एवायमिति। तत्रोभयथापि वस्तुनि ज्ञातेऽपि न तत् सुविज्ञातं स्यात् ॥

2. 'तदेव' इति नास्ति आ ॥

3. यदुपक्रमे आचार्येणोक्तमन्यदेवेत्यादि तदेवेहाप्युपसंहारे शिष्येण 'नो न वेदेति वेद च' इति च वाक्यान्तरेणोक्तमिति तात्पर्यावगमार्थम् ॥

4. यद्यात्मा न विषयः, सर्वथा तर्ह्यवेद्य एवेति मन्दबुद्धीनां मतिः स्यात्, तदपनयनार्थं च ॥



**यस्यामतं तस्य मतं**
**मतं यस्य न वेद सः।**
**अविज्ञातं विजानतां**
**विज्ञातमविजानताम् ॥ ३ ॥**

३९. शिष्याचार्यसंवादात् प्रतिनिवृत्य स्वेन रूपेण श्रुतिः समस्तसंवादनिर्वृत्तमर्थमेव बोधयति। 'यस्यामतम्' इत्यादिना ॥

यस्य ब्रह्मविदः अमतम् अविज्ञातम् अविदितं ब्रह्म इति मतम् अभिप्रायो निश्चयः तस्य मतम्। ज्ञातं सम्यग् ब्रह्म इत्यभिप्रायः। यस्य पुनर्मतं ज्ञातं विदितं मया ब्रह्मेति निश्चयः न वेदैव सः, न ब्रह्म विजानाति सः ॥

**विद्वदविदुषोर्मततारतम्यम्**—

४०. विद्वदविदुषोर्यथोक्तौ पक्षाववधारयति – अविज्ञातं विजानतामिति[1]। अविज्ञातम्, अमतम् अविदितमेव ब्रह्म विजानताम्। सम्यग्विदितवताम् इत्येतत्। विज्ञातं विदितं ब्रह्म अविजानताम् असम्यग्दर्शिनाम्। इन्द्रियमनोबुद्धिष्वेवाऽऽत्मदर्शिनाम् इत्यर्थः[2]। न त्वत्यन्तमेवाव्युत्पन्नबुद्धीनाम्। न हि तेषां 'विज्ञातमस्माभिर्ब्रह्म' इति मतिर्भवति[3]। इन्द्रियमनोबुद्ध्युपाधिष्वात्मदर्शिनां तु ब्रह्मोपाधिविवेकानुपलम्भात् बुद्ध्याद्युपाधेश्च विज्ञातत्वात् 'विदितं ब्रह्म' इत्युपपद्यते भ्रान्ति-

---

1. इदं वाक्यम् नास्ति आ. ॥

2. आत्मानात्माविवेकेनान्योन्याध्यासपरीतमनसाम्। तेषां हि भ्रान्तिर्ब्रह्म सुवेद्यमिति ॥

3. अत्यन्तमूढानां हि ब्रह्म सर्वथा अज्ञातमेव, कुतस्तेषां भ्रान्तिवार्तेति भावः। यद्यपि तेषामपि ब्रह्म न विदितं नाप्यविदितम्। तथापि नैव ते विदिताविदिताभ्यामन्यद् ब्रह्मेति जानन्ति। न हि ते किमपि जानन्त्यचेतसो ब्रह्मविषये इति ॥

रित्यतोऽसम्यग्दर्शनं पूर्वपक्षत्वेनोपन्यस्यते 'विज्ञातमविजानताम्' इति। अथवा हेत्वर्थ उत्तरार्धः 'अविज्ञातम्' इत्यादिः[1] ॥ ३ ॥

ब्रह्म कथं वेदनीयम् ?

**प्रतिबोधविदितं मत-**
**ममृतत्वं हि विन्दते।**
**आत्मना विन्दते वीर्यं**
**विद्यया विन्दतेऽमृतम् ॥ ४ ॥**

४१. 'अविज्ञातं विजानताम्' इत्यवधृतम्। यदि ब्रह्म अत्यन्तमेव अविज्ञातम्, लौकिकानां ब्रह्मविदां च अविशेषः प्राप्तः। 'अविज्ञातं विजानताम्' इति च परस्परविरुद्धम्। कथं तु तद्ब्रह्म सम्यग्विदितं भवतीत्येवमर्थमाह[2] ॥

**सर्वप्रत्ययदर्शित्वेनैवात्मा वेदितव्यः—**

४२. प्रतिबोधविदितं बोधं बोधं प्रति विदितम्। बोधशब्देन बौद्धाः प्रत्यया उच्यन्ते। सर्वे प्रत्यया विषयीभवन्ति, यस्य स आत्मा सर्वबोधान् प्रतिबुध्यते सर्वप्रत्ययदर्शी[3]। चिच्छक्तिस्वरूपमात्रः[4]

1. प्रथमव्याख्याने 'विज्ञातमविजानताम्' इति पूर्वः पक्षः। विज्ञातं ब्रह्मेति यत्तदविज्ञानमेव, भ्रान्तित्वादित्यर्थः। द्वितीये पुनर्यतः सम्यग्विजानताम् अविज्ञातम्, सर्वथाऽप्यविषयभूतमेव ज्ञानस्य, तस्माद्यस्यामतं तस्यैव मतं सम्यज्ज्ञातमित्यभिप्रायः ॥

2. यद्यप्यतीतानन्तरमन्त्रभाष्य एवैतच्छङ्कायाः समाधानमुक्तम्, तथापि मन्त्रे न स्पष्टमितीह स्पष्टीक्रियत इति ज्ञेयम् ॥

3. प्रत्ययास्तु न प्रत्ययदर्शिनः। न हि प्रत्ययाः स्वयमेवात्मानं द्रष्टुमलम्। युगपत्कर्मकर्तृत्वविरोधात्। नाप्येकः प्रत्ययः प्रत्ययान्तरं पश्येत्। तत्काले प्रत्ययान्तराभावादेव। तस्मात् साक्षिचैतन्यमेव सर्वप्रत्ययदर्शीति भावः ॥

4. न तु चिद्गुणकः ॥



प्रत्ययैरेव[1] प्रत्ययेष्वविशिष्टतया लक्ष्यते[2] नान्यद् द्वारम् अन्तरात्मनो[3] विज्ञानाय[4]। अतः प्रत्ययप्रत्यगात्मतया विदितं ब्रह्म यदा तदा तत् मतम्। तत्सम्यग्दर्शनम् इत्यर्थः ॥

**सर्वप्रत्ययदर्शित्वे च उपजनापायवर्जितदृक्स्वरूपता नित्यत्वं[5], विशुद्धस्वरूपत्वम्[6], आत्मत्वं[7], निर्विशेषता[8], एकत्वं च सर्वभूतेषु सिद्धं भवेत्। लक्षणभेदाभावात्, व्योम्न इव घटगिरिगुहादिषु[9]। विदिताविदिताभ्याम् अन्यद्ब्रह्म इत्यागमवाक्यार्थ एवं परिशुद्ध एवोपसंहृतो भवति[10]।** 'दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्ता विज्ञातेर्विज्ञाता'[11] (बृ. ३–४–२) इति हि श्रुत्यन्तरम् ॥

**व्याख्यानान्तरेषु दोषः—**

४३. यदा पुनर्बोधक्रियाकर्ता इति बोधक्रियालक्षणेन तत्कर्तारं विजानातीति बोधलक्षणेन विदितं प्रतिबोधविदितम् इति व्याख्या-

1. द्वारभूतैरित्यर्थः। न तु द्रष्टृभूतैः ॥

2. योऽहमश्रृणवं सोऽहमेवेदानीं पश्यामीति [illegible]संधानादिना सर्वप्रत्ययेष्वविशिष्टतया साक्षी लक्ष्यते स्वयमेवानुभूयत इत्यर्थः ॥

3. 'आत्मनो' इति आ· ॥

4. बौद्धप्रत्ययसंबन्ध एवोपलब्धिहेतुर्ब्रह्मणः। यथा राहोश्चन्द्रार्कसंबन्धः। न तस्य निर्विशेषस्योपलब्धिद्वारान्तरमस्ति ॥ तै. भा· २–६.

5. कालस्यापि साक्ष्यत्वात्, न कालकृता नित्यता तत्साक्षिणः। किं त्वव्यभिचरत्स्वरूपतैव कालातीता ॥

6. अन्तःकरणस्येव विषयरूषितत्वाभावात् ॥

7. साहङ्कारस्य सर्वस्यापि प्रत्यक्स्वरूपत्वात् ॥

8. जात्यादीनां विशेषाणां साक्ष्यधर्माणां साक्षिण्यसंभवात् ॥

9. उपाधिभेदैरप्यभिन्नत्वप्रदर्शनार्थं व्योमदृष्टान्तोपादानम् ॥

10. विदिताविदिताभ्यामन्यद्ब्रह्मेत्यागमवाक्यार्थोऽनुभवारूढो भविष्यति सर्वप्रत्ययसाक्षित्वेनात्मदर्शन इत्यभिप्रायः ॥

11. बृहदारण्यकश्रुतिरियमर्थतः प्रदर्शिता ॥

यते[1] यथा यो वृक्षशाखाश्चालयति स वायुरिति तद्वत्[2] । तदा बोधक्रियाशक्तिमान् आत्मा द्रव्यम्[3], न बोधस्वरूप एव । बोधस्तु जायते विनश्यति च । यदा बोधो जायते तदा बोधक्रियया सविशेषः[4] । यदा बोधो नश्यति तदा नष्टबोधो द्रव्यमात्रं निर्विशेषः । तत्रैवं सति विक्रियात्मकः सावयवोऽनित्योऽशुद्ध इत्यादयो दोषा न परिहर्तुं शक्यन्ते ॥

यदपि **काणादानाम्** आत्ममनःसंयोगजो बोध आत्मनि समवैति[5] अत आत्मनि बोद्धृत्वम्, न तु विक्रियात्मक आत्मा । द्रव्यमात्रस्तु भवति घट इव रागसमवायी । अस्मिन् पक्षेऽप्यचेतनं द्रव्यमात्रं ब्रह्मेति 'विज्ञानमानन्दं ब्रह्म' (बृ. ३-९-२८-७)इत्याद्याः श्रुतयो बाधिताः[6] स्युः । आत्मनो निरवयवत्वेन प्रदेशाभावात्[7], नित्यसंयुक्तत्वाच्च[8] मनसः स्मृत्युत्पत्तिनियमानुपपत्तिरपरिहार्या स्यात्[9] । संसर्गधर्मित्वं चात्मनः

1. भर्तृप्रपञ्चरीत्या स्याद् व्याख्यानमिदम् ॥ बृ. भा. ३-४-२.

2. अत्र तु व्याख्याने अविषयस्यापि विषयीकरणप्रयत्नः स्थित एव । अनुमानेन ग्रहणे साक्षाज्ज्ञानमिदं न भवतीत्ययमपरो दोषः । ऐ. भा. चतुर्थाध्यायवाक्यार्थविचारभाष्यमत्रानुसंधेयम् ॥

3. 'सह विशेषः' इत्यपपाठः ॥

4. आत्मनि द्रव्यगुणादिरूपत्वकल्पनं तत्स्वरूपपरिज्ञानाभावनिबन्धनमेवेत्याशयः॥ ऐ. भा. चतुर्थाध्यायवाक्यार्थविचारभाष्ये "अस्ति नास्ति, एकं नाना, गुणवदगुणम् ...... इति यो विकल्पयितुमिच्छति नूनं खमपि चर्मवद्वेष्टयितुमिच्छति" इत्यादि वाक्यमिहानुसंधेयम् ॥

5. समवायसंबन्धेन संबध्यते ॥

6. न च विज्ञानमित्यच्प्रत्ययान्तः शब्द इति कल्पनेन परिहारः शक्यः। वक्ष्यमाणदोषादिति भावः ॥

7. संयोगानुपपत्तेरिति शेषः ॥

8. न हि सर्वव्यापकेनात्मना संयोगः कदाचिदपि न विद्यत इति भावः । अभ्युपगमवादोऽयम् । संयोग एव तु नोपपद्यत इत्युक्तम् ॥

9. मा. का. भा. ३-५.



श्रुतिस्मृतिन्यायविरुद्धं कल्पितं स्यात्[1] । 'असङ्गो न हि सज्यते' (बृ. ३-९-२६, ४-५-१५), 'असक्तं सर्वभृत्' (गी. १३-१४) इति हि श्रुतिस्मृती[2] । न्यायश्च गुणवद्गुणवता संसृज्यते, नातुल्यजातीयम्[3] । अतो निर्गुणं निर्विशेषं सर्वविलक्षणं केनचिदतुल्यजातीयेन संसृज्यते इत्येतत् न्यायविरुद्धं[4] भवेत् । तस्मात् नित्यालुप्तज्ञानस्वरूपज्योतिरात्मा ब्रह्म इत्ययमर्थः सर्वबोधबोद्धृत्वे[5] आत्मनः सिध्यति नान्यथा । तस्मात् 'प्रतिबोधविदितं मतम्' इति यथाव्याख्यात एवार्थोऽस्माभिः ॥

यत्पुनः **स्वसंवेद्यता**[6] प्रतिबोधविदितमित्यस्य वाक्यस्यार्थो वर्ण्यते तत्र भवति सोपाधिकत्वे आत्मनो बुद्ध्युपाधिस्वरूपत्वेन भेदं परिकल्प्य 'आत्मनाऽऽत्मानं वेत्ति' इति संव्यवहारः । 'आत्मन्येवाऽऽत्मानं पश्यति' (बृ. ४-४-२३), 'स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम' (गी. १०-१५) इति । न तु निरुपाधिकस्याऽऽत्मन एकत्वे स्वसंवेद्यता परसंवेद्यता

1. नित्यशुद्धबुद्धमुक्तस्वभावो ह्यात्मा श्रुतिस्मृतिसंमत इति भावः ॥

2. श्रुतिस्मृती 'द्वे' इत्यधिकं क्वचित् ॥

3. न ह्यात्मनि तार्किकोत्प्रेक्षिता जातिरस्ति, नाप्यत्यन्तविरुद्धस्वभावयोरात्मानात्मनोस्तुल्यजातीयत्वं कथञ्चित् । अत आध्यासिकं विहाय न कश्चन संबन्धोऽनात्मन आत्मनेति सिद्धम् (गी. भा. १३-२६) । उपलक्षणमेतत् । समवायासिद्धेश्च ज्ञानगुणत्वानुपपत्तिरित्यपि द्रष्टव्यम् (सू. भा. २-२-१७) । यत्त्विदानींतनाः केचिद्वेदान्तिनः काणादैकदेशित्वमवलम्बमानाश्चिद्द्रव्यस्यैव चिद्गुणतेत्यातिष्ठन्ते तत्राप्युक्तदोषानुषङ्ग एव । चित्स्वरूपचिद्गुणयोः स्वरूपवैलक्षण्यानवगमात्, संसर्गानवगमाच्चेत्यवधेयम् ॥

4. न च निर्गुणत्वमेव न सिद्धमिति वाच्यम् । श्रुतिस्मृतिविरोधे कथितदोषदूषितत्वे च सगुणत्वस्यैव दुरुपपादत्वात् । उपासनावाक्यगतसगुणवचनानामतत्परत्वाच्चेति ध्येयम् ॥ सू. भा. ३-२-१४.

5. सर्वप्रत्ययसाक्षित्वे ॥

6. अयं कस्य वेदान्तिनः पक्ष इति न विज्ञायते । बौद्धपक्षसजातीयस्त्वेष इति तु स्फुटमेव । अत एव प्रसङ्गात् बाह्यवादिनामपि बौद्धानामनुपदमेव निरासः करिष्यते ॥

वा संभवति। संवेदनस्वरूपत्वात् संवेदनान्तरापेक्षा च न संभवति यथा प्रकाशस्य प्रकाशान्तरापेक्षाया न संभवस्तद्वत् ॥

**बौद्धपक्षे** स्वसंवेद्यतायां तु क्षणभङ्गुरत्वं निरात्मकत्वं च विज्ञानस्य स्यात्। 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' (बृ. ४–३–३०) 'नित्यं विभुं सर्वगतम्' (मु. १–१–६), 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयः' (बृ. ४–४–२५) - इत्याद्याः श्रुतयो बाध्येरन्[1] ॥

यत्पुनः प्रतिबोधशब्देन निर्निमित्तो बोधः प्रतिबोधः यथा सुप्तस्य इत्यर्थं परिकल्पयन्ति[2]। सकृद्विज्ञानं प्रतिबोध इत्यपरे[3]। निर्निमित्तः सनिमित्तः सकृद्वाऽसकृद्वा प्रतिबोध एव हि सः ॥

## सम्यग्दर्शनफलम्—

४४. अमृतत्वं अमरणभावं **स्वात्मन्यवस्थानं[4] मोक्षं** हि यस्मात् विन्दते लभते यथोक्तात् प्रतिबोधात्[5] प्रतिबोधविदितात्मकात्। तस्मात् प्रतिबोधविदितमेव मतम् इत्यभिप्रायः। बोधस्य हि प्रत्यगात्मविषयत्वं च मतम् अमृतत्वे हेतुः[6]। न ह्यात्मनोऽनात्मत्वम् अमृतत्वं

1. यद्यपि बौद्धा न श्रुतिं बहुमन्वते। तथापि श्रुतिविरोधान्न तेषां पक्ष आदरणीय आस्तिकैरित्यभिप्रायेण श्रुत्युदाहरणं क्रियते। क्षणभङ्गवादाभ्युपगमाद्युक्तिविरोधः स्फुट एवेत्यन्यत्र (सू. भा. २–२–२८, ३१) विस्तरः ॥

2. अयमपि कस्य वाद इति न विज्ञायते। असम्प्रज्ञातसमाधिवादिनामिति तु (आ॥) टीकाकारः ॥

3. सद्योमुक्तिवादिनां ज्ञानमात्रेण शरीरपात इत्येवं वदतां वाद एष इति टीकाकाराभिप्रायः। एष वाक्यभाष्यकारस्यापि संमतो वादः ॥

4. तै. भा. अव.। इयमेव माण्डूक्यभाष्यावतरणिकोक्ता स्वस्थता ॥

5. प्रतिबोधादमृतत्वं विन्दत इति वचनादप्रतिबोध एव मर्त्यत्वे हेतुरित्युक्तं भवति ॥

6. प्रत्यगात्मैवाहं प्रतिबोधसाक्षीति बोधो हि प्रत्यगात्मनो विषयः ॥



भवति। आत्मत्वादात्मनोऽमृतत्वं निर्निमित्तमेव। एवं मर्त्यत्वमात्मनो यदविद्यया अनात्मत्वप्रतिपत्तिः[1] ॥

कथं पुनर्यथोक्तया आत्मविद्यया अमृतत्वं विन्दते? इत्यत आह। आत्मना स्वेन रूपेण विन्दते लभते वीर्यं बलं सामर्थ्यम्। **धनसहायमन्त्रौषधितपोयोगकृतं[2] वीर्यं मृत्युं न शक्नोत्यभिभवितुम्। अनित्यवस्तुकृतत्वात्। आत्मविद्याकृतं तु वीर्यम् आत्मनैव विन्दते नान्येनेत्यतोऽनन्यसाधनत्वात् आत्मविद्यावीर्यस्य तदेव वीर्यं मृत्युं शक्नोत्यभिभवितुम्।** यत एवम् आत्मविद्याकृतं वीर्यम् आत्मनैव विन्दते। अतः विद्यया आत्मविषयया विन्दते अमृतम् अमृतत्वम्। 'नायमात्मा बलहीनेन लभ्यः'[3] (मु. ३–२–४) **इत्याथर्वणे**। अतः समर्थो हेतुः 'अमृतत्वं हि विन्दते' इति ॥ ४ ॥

### इहैव ब्रह्मवेदनं संपादयितव्यम्

**इह चेदवेदीदथ सत्यमस्ति**
**न चेदिहावेदीन्महती विनष्टिः।**
**भूतेषु भूतेषु विचित्य धीराः**
**प्रेत्यास्माल्लोकादमृता भवन्ति ॥ ५ ॥**

1. आत्मनोऽमृतत्वं स्वरूपम् 'अमृतोऽभयः' (बृ. ४-४-२५) इति श्रुतेः। मर्त्यत्वं त्वज्ञानकृतं न स्वाभाविकमित्यर्थः ॥

2. धनम्- गवादि, सहायः- सहचारी जनः, मन्त्रः-इष्टसिद्ध्यर्थं जपितव्यः, औषधम्- कायकल्पाद्यवगतम्, तपः-कृच्छ्रादि, योगः- अष्टाङ्गः प्रसिद्धः। एतत्कृतवीर्यस्य तत्तत्साधनानुगुण्यादनित्यत्वं प्रसिद्धमेव ॥

3. बलहीनेन - अशेषविषयदृष्टितिरस्करणफलकात्मनिष्ठाजनितवीर्यहीनेनेत्यर्थः। नित्यलब्धस्वभावत्वात् ॥

४५. कष्टा खलु सुरनरतिर्यक्प्रेतादिषु संसारदुःखबहुलेषु प्राणिनिकायेषु जन्मजरामरणरोगादिसंप्राप्तिरज्ञानात्[1] । अतः इहैव चेत् मनुष्योऽधिकृतः समर्थः[2] सन् यदि अवेदीत् आत्मानं यथोक्तलक्षणं[3] विदितवान् यथोक्तेन प्रकारेण[4] अथ तदा अस्ति सत्यम् मनुष्यजन्मन्यस्मिन् अविनाशः, अर्थवत्ता वा सद्भावो वा। परमार्थता वा सत्यं[5] विद्यते। न चेदिह अवेदीत्[6] । न चेत् इह जीवंश्चेत् अधिकृतः अवेदीत् न विदितवान् तदा महती दीर्घा अनन्ता विनष्टिः **विनाशनं जन्मजरामरणादिप्रबन्धाविच्छेदलक्षणा संसारगतिः** । तस्मात् एवं गुणदोषौ विजानन्तो ब्राह्मणा[7] भूतेषु भूतेषु सर्वभूतेषु स्थावरेषु चरेषु च एकम् आत्मतत्त्वं ब्रह्म विचित्य विज्ञाय साक्षात्कृत्य[8] धीरा धीमन्तः **प्रेत्य व्यावृत्य ममाहंभावलक्षणात् अविद्यारूपात् अस्माल्लोकात् उपरम्य**[9]

1. न हि यावदज्ञानं कश्चिदपि लोकं गतस्य दुःखबहुलसंसारव्यावृत्तिः संभवतीत्यर्थः ॥ क. भा. १-२-४, बृ. भा. ४-४-१४.

2. ई. भा. अव ; ऐ. आ. २-३-२ ; तै. भा. २-१ ; जै. सू. ६-१-२५ तममारभ्य ४२ पर्यन्तं शा. भा.

3. विदिताविदिताभ्यामन्यस्वरूपम् ॥

4. आगमाचार्यस्वात्मप्रतिपत्तिसंगानं यथा स्यात् तथा प्रतिबोधविदितं ब्रह्मेति ॥

5. सत्यमिति यथार्थफलम्, जन्मसार्थक्यम्, जातस्य साधुभावः - इति प्रकारत्रयेण व्याख्यातम्, अथेदानीं तदानीमेव परमार्थप्रतिपत्तिः इति तुरीयं व्याख्यानमेतत्। अयमेवाऽऽचार्यसंमतः सद्योमुक्तिवादः ॥

6. अस्यानन्तरम् 'इति' इत्यधिकम् आ. ॥

7. ब्राह्मणानां हि संसाराद् व्यावृत्तौ विशेषतोऽधिकारः ॥ मु. भा. १-२-१२.

8. अत्र साक्षात्करणं वाक्यज्ञानान्नार्थान्तरं किं तु वाक्यादात्मज्ञानं यत्कालं तत्कालमेवाज्ञानप्रहाणपूर्वकं अयमहमस्मि सर्वबोधसाक्षीत्यागमानुसारी बोध एव ॥ बृ. भा. १-४-१०.

9. मृत्वेति तु नार्थः। सद्योमुक्त्यधिकारात् ॥



**सर्वात्मैकत्वम्**[1] **अद्वैतम् आपन्नाः सन्तः अमृता भवन्ति । ब्रह्मैव भवन्तीत्यर्थः** । 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मु.३-२-९) इति श्रुतेः ॥ ५ ॥

इति द्वितीयः खण्डः

---

1. सर्वेषामपि य एकात्मा तद्भावम् इत्यर्थः। 'सर्वात्मैकत्वभावम्' इति तु मुद्रितपुस्तकेषु ॥

# अथ तृतीयः खण्डः

## देवतानां मिथ्याभिमानप्राप्तिः

**ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ १ ॥**

**तृतीयखण्डसंबन्धः—**

४६. 'ब्रह्म ह देवेभ्यो विजिग्ये'[1] । 'अविज्ञातं विजानतां विज्ञातमविजानताम्' (२–३) इत्यादिश्रवणात् यदस्ति तद्विज्ञातं प्रमाणैः, यन्नास्ति तदविज्ञातं शशविषाणकल्पमत्यन्तमेवासत् दृष्टम्। तथेदं ब्रह्म अविज्ञातत्वादसदेव इति मन्दबुद्धीनां[2] व्यामोहो मा भूदिति तदर्थेयमाख्यायिका आरभ्यते। तदेव हि ब्रह्म सर्वप्रकारेण प्रशास्तृ देवानामपि परो देवः[3], ईश्वराणामपि परमेश्वरः[4] । दुर्विज्ञेयो देवानां जयहेतुः, असुराणां पराजयहेतुः। तत्कथं नास्ति[5] ?— इत्येतस्यार्थस्य अनुकूलानि हि उत्तराणि वचांसि दृश्यन्ते ॥

---

1. इत्यस्य संबन्धः कथ्यत इति शेषः ॥

2. यद्यपि ब्रह्म न प्रमाणगोचरम्, तथापि प्रमातुरात्मैव ; प्रमातुश्चासत्त्वे प्रमाणानामेवासत्त्वप्रसङ्ग इति न तत्प्रत्याख्यानं युज्यते ; मन्दबुद्धीनां तु भ्रान्तिरुपजायते ब्रह्मासत् प्रमाणागोचरत्वादितीत्यभिप्रायः ॥

3. देवः प्रकाशकः, सर्वज्ञः ॥

4. 'ईश्वरः' इति आ ॥ सर्वस्वतन्त्रः शासनकर्तेत्यर्थः ॥ श्वे· ६–७.

5. कथं नास्तीत्यसत्त्वाक्षेपो न त्वस्तित्वधर्मविधानम्। तथा च 'यदि मन्यसे सुवेदेति' (२–१) इत्यनेनैकार्थ्यमविरोधेन सिध्यतीति बोध्यम् ॥



अथवा ब्रह्मविद्यायाः स्तुतये। कथम्? ब्रह्मविज्ञानाद्धि अग्न्यादयो देवा देवानां श्रेष्ठत्वं जग्मुः। ततोऽप्यतितराम् इन्द्रः इति। अथवा दुर्विज्ञेयं ब्रह्मेत्येतत्प्रदर्श्यते। येनाग्न्यादयोऽतितेजसोऽपि क्लेशेनैव ब्रह्म विदितवन्तः। तथेन्द्रो देवानामीश्वरोऽपि सन्निति[1] ॥

वक्ष्यमाणोपनिषद्विधिपरं[2] वा सर्वम् । ब्रह्मविद्याव्यतिरेकेण प्राणिनां कर्तृत्वभोक्तृत्वाद्यभिमानो मिथ्येत्येतद्दर्शनार्थं वा आख्यायिका। यथा देवानां जयाद्यभिमानस्तद्वदिति[3] ॥

**मन्त्रव्याख्यानम्—**

४७. ब्रह्म यथोक्तलक्षणं[4] परं ह किल देवेभ्योऽर्थाय विजिग्ये जयं लब्धवत्। देवानामसुराणां च सङ्ग्रामे असुरान् जित्वा जगदरातीन् ईश्वरसेतुभेत्तॄन्[5] देवेभ्यो (वि)जयं तत्फलं च प्रायच्छत् जगतः स्थेम्ने ॥

तस्य ह किल ब्रह्मणो विजये देवा अग्न्यादयः अमहीयन्त महिमानं प्राप्तवन्तः। तदा आत्मसंस्थस्य प्रत्यगात्मन ईश्वरस्य सर्वज्ञस्य सर्व-

---

1. इत्थं महाभागा ब्रह्मविद्या, दुर्विज्ञेयं च ब्रह्म यतः, तस्मात्सा विद्या यत्नतोऽधिगन्तव्या मुमुक्षुभिरिति भावः ॥

2. चतुर्थखण्डे विधास्यमानोपासनास्तुतिपरं वेत्यर्थः। अत्रैव तात्पर्यं भाष्यकाराणाम्, अर्थान्तरतात्पर्यदर्शनं तु संभावनामात्रमिति केचित्। तत्र भाष्यकारसंमतिर्न समुन्नेतुं शक्या ॥

3. अतोऽभिमानं त्यक्त्वा विद्या संपादयितव्येत्यभिप्रायः ॥

4. श्रोत्रस्य श्रोत्रम्, अन्यदेव तद्विदितादविदिताद्- इत्याद्युक्तलक्षणं सर्वस्यात्मभूतम् ॥

5. ईश्वरसेतुः वर्णाश्रमादिव्यवस्था। ईश्वरो हि 'सेतुर्विधरणः' (बृ· ४–४–२२), 'सेतुर्विधृतिरेषां लोकानामसंभेदाय' (छा· ८–४–१) इति च श्रुतेः। तत्कृतव्यवस्था च सेतुरुच्यते लक्षणया। तद्भेत्तॄन् विनाशकान् इत्यर्थः ॥

क्रियाफलसंयोजयितुः[1] प्राणिनां सर्वशक्तेः जगतः स्थितिं चिकीर्षोरयं विजयो[2] महिमा च इत्यजानन्तः, ते देवाः ऐक्षन्त ईक्षितवन्तः 'अग्न्यादिस्वरूपपरिच्छिन्नात्मकृतोऽ[3]स्माकमेवायं विजयः, अस्माकमेवायं महिमा अग्निवाय्विन्द्रत्वादिलक्षणो जयफलभूतोऽस्माभिरनुभूयते । नास्मत्प्रत्यगात्मभूतेश्वरकृतः इति ॥ १ ॥

### ब्रह्मणो रूपविशेषेण प्रादुर्भावः

**तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव**
**तन्न व्यजानत किमिदं यक्षमिति ॥ २ ॥**

### देवतानामाविर्भूतब्रह्मस्वरूपाविज्ञानम्––

४८. एवं मिथ्याभिमानेक्षणवतां तद् ह किल एषां मिथ्येक्षणं विजज्ञौ विज्ञातवद् ब्रह्म । सर्वेक्षितृ हि तत् सर्वभूतकरणप्रयोक्तृत्वात्[4] । देवानां च मिथ्याज्ञानमुपलभ्य- मैव असुरवद्देवा मिथ्याभिमानात् पराभवेयुरिति[5] तदनुकम्पया देवान् मिथ्याभिमानापनोदनेनानुगृह्णीयाम्[6] इति तेभ्यो देवेभ्यो ह किल अर्थाय प्रादुर्बभूव स्वयोगमाहात्म्यनिर्मितेन[7] अत्य-

1. न हि धर्ममात्रं फलदातृ, धर्माधर्मयोरपि कारयितृत्वादीश्वरस्य तस्यैव फलदातृत्वं युक्तमिति भावः ॥ सू. भा. ३-२-३८, ४१.

2. 'जयो' इत्येव मुद्रितपुस्तकेषु । उपनिषदनुसारेण तु सर्वत्र विपूर्वक एव भाष्येऽपि पाठः स्यादित्युन्नीयते ॥

3. यद्यपि तेऽग्न्यादयः परमार्थतोऽपरिच्छिन्नात्मस्वरूपा एव, तथाप्यग्न्यादिस्वरूपमेव परिच्छिन्नमस्माकमित्यभिमानवशाः सन्त अस्माकमेव पृथक्पृथगग्न्यादिरूपाणामयं विजय इति मन्यन्ते स्म ॥

4. प्रथमखण्डोक्तरीत्या स्वसन्निधिमात्रेण सर्वकरणप्रेषयितृत्वात् ॥

5. अनेन पराभवहेतुरासुरसंपदेवेति सूचितम् ॥

6. अनेन तदा तदा दर्पादिपरिहारेणापि भक्ताननुगृह्णाति परमेश्वर इत्युक्तं भवति ॥

7. योगो युक्तिर्घटना गुणानाम् । मायेति यावत् (गी. भा. ७-२५) । तथा च देवानुग्रहार्थं स्वेच्छया मायामयं रूपं स्वीकृतवद्ब्रह्म, स्वरूपं तु पारमार्थिकं तथैव स्थितमिति लभ्यते ॥



द्भुतेन विस्मापनीयेन रूपेण, देवानाम् इन्द्रियगोचरे प्रादुर्बभूव प्रादुर्भूतवत्[1] । तत् प्रादुर्भूतं ब्रह्म न व्यजानत नैव विज्ञातवन्तः देवाः, किमिदं यक्षं पूज्यं महद्भूतमिति[2] ॥ २ ॥

### अग्न्यादीनां गर्वभङ्गः

**तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ ३ ॥ तदभ्यद्रवत् तमभ्यवदत् कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ ४ ॥ तस्मिꣳस्त्वयि किं वीर्यमित्यपीदꣳ सर्वं दहेयं यदिदं पृथिव्यामिति ॥ ५ ॥ तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ ६ ॥**

### देवैरग्निप्रेषणम्––

४९. ते तदजानन्तो देवाः सान्तर्भयास्तद्विजिज्ञासवः अग्निम्

1. 'प्रादुर्भूतवत्' इति नास्ति आ. ॥

2. महच्च तद् भूतं च सर्वमहत्तरत्वादाकाशादिकारणत्वाच्च । भूतं त्रिष्वपि कालेषु स्वरूपाव्यभिचारात्सर्वदैव परिनिष्पन्नमिति त्रैकालिको निष्ठाप्रत्ययः । अथवा भूतशब्दः परमार्थवाची । महच्च पारमार्थिकं चेत्यर्थः (बृ.भा. २-४-१२) । यद्यपि प्रादुर्भूतं रूपं तात्कालिकम्, तथापि कस्य महतो भूतस्य रूपमिदमिति न विज्ञातवन्त इत्यभिप्रायः ॥

अग्रगामिनं[1] जातवेदसं सर्वज्ञकल्पम्[2] अब्रुवन् उक्तवन्तः । हे जातवेदः एतत् अस्मद्गोचरस्थं यक्षं विजानीहि विशेषतो बुध्यस्व त्वं नस्तेजस्वी किमेतद् यक्षमिति । तथाऽस्तु इति तद् यक्षम् अभ्यद्रवत् तत्प्रति गतवानग्निः ॥

### यक्षाग्निसंवादः, अग्निगर्वभङ्गश्च

५०. तं च गतवन्तं पिपृच्छिषुं तत्समीपे अप्रगल्भत्वात्[3] तूष्णींभूतं तद्यक्षं अभ्यवदत् अग्निम् प्रति अभाषत 'कोऽसि ?' इति । एवं ब्रह्मणा पृष्टोऽग्निः अब्रवीत् । 'अग्निर्वै अग्निनामाहं प्रसिद्धो जातवेदा' इति च नामद्वयेन प्रसिद्धतया आत्मानं श्लाघयन्निति[4] । एवमुक्तवन्तं ब्रह्म अवोचत् । 'तस्मिन् एवं प्रसिद्धगुणनामवति त्वयि किं[5] वीर्यं सामर्थ्यम् ?' इति । सोऽब्रवीत् इदं जगत्सर्वं दहेयं भस्मीकुर्याम्, यदिदं स्थावरादि-पृथिव्यामिति । पृथिव्यामित्युपलक्षणार्थम् । यतोऽन्तरिक्षस्थमपि दह्यत एवाग्निना ॥ ५ ॥

तस्मै एवमभिमानवते[6] ब्रह्म तृणं निदधौ पुरोऽग्नेः स्थापितवत् । ब्रह्मणा 'एतत् तृणमात्रं ममाग्रतो दह । न चेदसि दग्धुं समर्थः मुञ्च दग्धृत्वाभिमानं सर्वत्र' इत्युक्तः तत् तृणम् उपप्रेयाय तृणसमीपं गतवान् सर्वजवेन सर्वोत्साहकृतेन वेगेन । गत्वा तत्[7] न शशाक नाशकत् दग्धुम् ॥

1. 'अग्निर्मुखं प्रथमो देवतानाम्' इति मन्त्रवर्णात् । 'अग्निर्वै देवानामवमः' (ऐ. ब्रा. १-१) इति ब्राह्मणाच्च ॥
2. जातं जातं वेत्तीति जातवेदाः । जातवेदस्त्वादेव सर्वज्ञकल्पोऽग्निः ॥
3. अग्नेः प्रत्यगात्मभूतः परमात्मैव तच्छक्त्याधायकः । अत एव चाग्नेः परमात्मसमीपेऽप्रागल्भ्यम् ॥
4. परिच्छिन्नात्माभिमानस्य लिङ्गमेतत् ॥
5. ब्रह्मव्यतिरिक्तस्याग्नेः किमपि वीर्यं न विद्यत इति काका सूचितमत्र ॥
6. सर्वदग्धृत्वाभिमानवते ॥
7. त्रुटितमिदं पदम् आ. ॥



### अग्नेः प्रतिगमनम्—

५१. स जातवेदास्तृणं दग्धुमशक्तो व्रीडितो हतप्रतिज्ञः तत एव यक्षादेव तूष्णीं देवान् प्रति निववृते निवृत्तः प्रतिगतवान् 'नैतद् यक्षम् अशकं शक्तवान् अहं विज्ञातुं विशेषतो (ज्ञातुं) यदेतद्यक्षम्' इति ॥६॥

**अथ वायुमब्रुवन् वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ ७ ॥ तदभ्यद्रवत्तमभ्यवदत् कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥ ८ ॥ तस्मिꣳस्त्वयि किं वीर्यमित्यपीदꣳ सर्वमाददीय[1] यदिदं पृथिव्यामिति ॥ ९ ॥ तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥१०॥**

### देवैर्वायुप्रेषणं यक्षेण तद्गर्वभङ्गश्च--

५२. अथ अनन्तरं वायुमब्रुवन् 'हे वायो एतद् विजानीहि' इत्यादि समानार्थं पूर्वेण । वानाद् गमनात्, गन्धनाद्वा[2] वायुः । मातरि अन्तरिक्षे श्वयतीति मातरिश्वा । इदं सर्वमपि आददीय गृह्णीयाम् यदिदं पृथिव्याम्— इत्यादि समानमेव[3] ॥

1. 'आददीयम्' इति क्वचित्पाठः । स तु च्छान्दसो लेखकप्रमादो वा स्यात् ॥
2. वा गतिगन्धनयोः इति धातोर्निष्पन्नो वायुशब्द इत्यर्थः ॥
3. पूर्वमन्त्र इव भाष्यमूह्यमित्यर्थः ॥

**अथेन्द्रमब्रुवन् मघवन्नेतद्विजानीहि किमेत-द्यक्षमिति तथेति । तदभ्यद्रवत्तस्मा-त्तिरोदधे ॥ ११ ॥**

देवैरिन्द्रप्रेषणम्, इन्द्रस्य यक्षसंवादालाभः––

५३. अथेन्द्रमब्रुवन् 'मघवन् एतद्विजानीहि' इत्यादि पूर्ववत् । इन्द्रः परमेश्वरो मघवान्[1] बलवत्त्वात्[2] । तथेति तदभ्यद्रवत् । तस्मादिन्द्रात् आत्मसमीपं गतात् तद्ब्रह्म तिरोदधे तिरोभूतम् । 'इन्द्रस्य इन्द्रत्वाभिमानोऽतितरां निराकर्तव्यः'[3] इत्यतः संवादमात्रमपि नादात् ब्रह्म इन्द्राय[4] ॥

### उमासंदर्शनम्

**स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमाꣳ हैमवतीं ताꣳ होवाच किमेत-द्यक्षमिति ॥ १२ ॥**

५४. तद्यक्षं यस्मिन्नाकाशे आकाशप्रदेशे आत्मानं दर्शयित्वा तिरोभूतम्, इन्द्रश्च ब्रह्मणस्तिरोधानकाले यस्मिन् आकाशे आसीत् स इन्द्रः तस्मिन्नेवाकाशे तस्थौ 'किं तद्यक्षम् ? ' इति ध्यायन् । न निववृते अग्न्यादिवत् । तस्य इन्द्रस्य यक्षे भक्तिं बुद्ध्वा विद्या उमारूपिणी प्रादु-

1. 'मघवा' इति वा. ॥
2. बलाभिमानिनी हि देवता इन्द्रः। 'यज्ञवत्त्वात्' इति पाठं केचिदिच्छन्ति। तत्रोपपत्तिं न पश्यामः ॥
3. परमेश्वर एक एव हीन्द्रः। इन्द्रस्य तु परिच्छिन्नकार्यकारणसंघाते परमेश्वरत्वाभिमानो मृषैवेति स नितरां निराकर्तव्यः ॥
4. तत एवेन्द्रस्याभिमानो बीयाय। ब्रह्मजिज्ञासा चोत्पन्ना ॥



रभूत् स्त्रीरूपा । स इन्द्रः ताम् उमां बहुशोभमानाम् । सर्वेषां हि शोभमानानां शोभ(मा)नतमा विद्या । तदा 'बहुशोभमाना' इति विशेषणम् उपपन्नं भवति । हैमवतीं हेमकृताभरणवतीमिव बहुशोभमानाम् इत्यर्थः । अथवा **उमैव हिमवतो दुहिता हैमवती** नित्यमेव सर्वज्ञेनेश्वरेण सह वर्तत इति ज्ञातुं समर्थेति तामुपजगाम । इन्द्रस्तां ह उमां किल उवाच पप्रच्छ 'ब्रूहि किमेतद् दर्शयित्वा तिरोभूतं यक्षम्' इति ॥

इति तृतीयः खण्डः

---

# अथ चतुर्थः खण्डः

इन्द्रस्य उमया उपदेशः

**सा[1] ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदांचकार ब्रह्मेति ॥१॥**

५५. सा ब्रह्मेति होवाच । ह किल[2] ब्रह्मणो वै ईश्वरस्यैव विजये– ईश्वरेणैव जिता असुराः, यूयं तत्र निमित्तमात्रम्[3] । तस्यैव विजये – यूयं महीयध्वं महिमानं प्राप्नुथ । 'एतद्' इति क्रियाविशेषणार्थम्[4] । मिथ्याभिमानस्तु युष्माकम् 'अस्माकमेवायं विजयोऽस्माकमेवायं महिमा' इति ॥

ततः तस्मादुमावाक्यात् ह एव विदांचकार ब्रह्मेति इन्द्रः अवधारणात् 'ततो हैव' इति न स्वातन्त्र्येण[5] ॥

इन्द्रादीनामतिशयप्राप्तिकारणम्

**तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुस्ते ह्येनत् प्रथमो विदांचकार ब्रह्मेति ॥२॥**

1. 'सा' इति नास्ति केषुचित्कोशेषु ॥
2. हेति वृत्तानुस्मरणार्थो निपातः ॥ 3. गी. भा. ११–३३.
4. न तु विजयविशेषणम् । तथा च ब्रह्मण एव विजये यूयमेवं महीयध्वमिति योजनेति भावः ॥
5. गुरूपदेशमन्तरा विषमं ब्रह्म विज्ञातुमिति भावः । तस्माद्गुरुमेवाभिगच्छेत्तद्विज्ञानार्थमिति च ॥ मु. भा. १–२–१२.



ब्रह्मज्ञानस्य दृष्टं फलम्––

५६. यस्माद् अग्निवाय्विन्द्रा एते देवा ब्रह्मणः संवाददर्शनादिना सामीप्यमुपगताः, तस्माद् स्वैर्गुणैः[1] अतितरामिव शक्तिगुणादिमहाभाग्यैः अन्यान् देवान् अतितराम् अतिशेरत इव[2] एते देवाः । इवशब्दोऽनर्थकः, अवधारणार्थो वा । यत् अग्निः, वायुः, इन्द्रः । ते हि देवा यस्मात् एनद्ब्रह्म नेदिष्ठम् अन्तिकतमं प्रियतमं पस्पृशुः स्पृष्टवन्तः यथोक्तैर्ब्रह्मणः संवादादिप्रकारैः । ते हि यस्माच्च हेतोः एनद्ब्रह्म प्रथमः प्रथमाः । प्रधानाः सन्त इत्येतत्[3] । विदांचकार । विदांचक्रुरित्येतत् । ब्रह्मेति ॥

**तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदांचकार ब्रह्मेति ॥३॥**

इन्द्रस्य सर्वदेवश्रेष्ठत्वे हेतुः––

५७. यस्मादग्निवायू अपीन्द्रवाक्यादेव विदांचक्रतुः । इन्द्रेण हि उमावाक्यात् प्रथमं श्रुतं ब्रह्मेति[4] । तस्माद्वै इन्द्रः अतितरामिव अतिशेते इव[5] अन्यान् देवान् । 'स ह्येनत् नेदिष्ठं पस्पर्श यस्मात् स ह्येनत् प्रथमो विदांचकार ब्रह्मेति' उक्तार्थं वाक्यम् ॥

1. 'ऐश्वर्यगुणैः' इति आ. ॥
2. 'अतिशयेन शेरत इव' इति आ. ॥
3. प्रक्रमानुरोधेन वचनविपरिणामः कार्य इति भावः । ये खलु महाभागाः सोपाधिकब्रह्मोपासनया तदनुग्रहं प्राप्नुवन्ति, ये च गुरूपदेशेन तस्य परमार्थस्वरूपं प्रत्यगात्मभूतं विजानन्ति त एवेतरान् अतिशेरते सर्वप्रकारेणापीत्याशयः ॥ 4. 'ब्रह्मेत्यतः' इति आ. ॥
5. इवशब्दोऽनर्थकः । 'अतितराम् अतिशयेन शेते इव' इति आ. ॥

### ब्रह्मणः उपमोपदेशः

**तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा३**
**इतीन्न्यमीमिषदा३ इत्यधिदैवतम् ॥ ४ ॥**

**अधिदैवतोपमानोपदेशः—**

५८. तस्य प्रकृतस्य ब्रह्मणः एष आदेशः उपमोपदेशः। निरुपमस्य ब्रह्मणो येनोपमानेनोपदेशः सोऽयमादेशः इत्युच्यते। किं तत्? यदेतत् प्रसिद्धं लोके विद्युतः व्यद्युतत्, विद्योतनं कृतवत्– इत्येतदनुपपन्नमिति 'विद्युतो विद्योतनम्' इति कल्प्यते। आ इत्युपमार्थे। विद्युतो विद्योतनमिव इत्यर्थः। 'यथा सकृद्विद्युत्तम्' (बृ. २–३–६) इति श्रुत्यन्तरे च दर्शनात्[1]। विद्युदिव हि सकृदात्मानं दर्शयित्वा तिरोभूतं ब्रह्म देवेभ्यः। अथवा विद्युतः। 'तेजः' इत्यध्याहार्यम्। व्यद्युतत् विद्योतितवत्[2] आ३ इव। विद्युतस्तेजः सकृद्विद्योतितवदिवेत्यभिप्रायः। इतिशब्द आदेशप्रतिनिर्देशार्थः, 'इत्ययमादेशः' इति ॥

इच्छब्दः समुच्चयार्थः, अयं चापरस्तस्याऽऽदेशः। कोऽसौ? न्यमीमिषत् यथा चक्षुः। न्यमीमिषत् निमेषं कृतवत्। स्वार्थे णिच्, उपमार्थ एवाऽऽकारः। चक्षुषो विषयं प्रति प्रकाशतिरोभाव इव चेत्यर्थः। इत्यधिदैवतं[3] देवताविषयं ब्रह्मण उपमानदर्शनम् ॥

---

1. विद्युतः इति पञ्चमीग्रहणे विद्युतः सकाशाद्विद्योतनं कृतवदिति प्राप्नोति। तदेतदनुपपन्नम्। ब्रह्मणः स्वयंप्रकाशत्वात्। षष्ठीग्रहणे तु विद्युतः संबन्धिविद्योतनं कृतवदिति प्राप्नोति। तच्च यद्यपि कथंचिदुपपद्यते 'तस्य भासा सर्वमिदं विभाती'ति श्रुतेः, तथापि प्रकृतोपमोपदेशो न निर्वर्तितो भवतीत्यतो विद्युतो विद्योतनमिवेति कल्प्यते। एवं न्यमीमिषदित्यत्रापि निमेषणमित्यर्थः कल्प्यते ॥

2. सकृदभिव्यक्तिनिर्देशार्थमुपमानमित्यभिप्रायः ॥

3. यद्यपि चक्षुरध्यात्ममेव, तथापि तस्य विषयप्रकाशः सालोकोऽधिदैवतमेव भवतीत्यभिप्रायेणायमादेश इति भावः ॥



**अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन**
**चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥ ५ ॥**

**अध्यात्मोपमानोपदेशः—**

५९. अथ अनन्तरम्[1] अध्यात्मं प्रत्यगात्मविषय आदेश उच्यते। यदेतद् गच्छतीव च मनः, एतद् ब्रह्म ढौकत इव विषयीकरोतीव। यच्चानेन[2] मनसा एतद्ब्रह्म उपस्मरति समीपतः स्मरति साधकः अभीक्ष्णं भृशम्। संङ्कल्पश्च मनसो ब्रह्मविषयः। मनउपाधिकत्वाद्धि मनसः सङ्कल्पस्मृत्यादि[3] प्रत्ययैरभिव्यज्यते ब्रह्म विषयीक्रियमाणमिव[4]। अतः स एष ब्रह्मणोऽध्यात्ममादेशः ॥

**उपमोपदेशेन प्रयोजनम्—**

६०. विद्युन्निमेषणवदधिदैवतं द्रुतप्रकाशनधर्मि, अध्यात्मं च मनःप्रत्ययसमकालाभिव्यक्तिधर्मि[5] इत्येष आदेशः[6]। एवमादिश्यमानं हि ब्रह्म मन्दबुद्धिगम्यं भवतीति ब्रह्मण अदेशोपदेशः[7]। न हि निरुपाधिकमेव ब्रह्म मन्दबुद्धिभिराकलयितुं शक्यम्[8] ॥

---

1. द्रुतप्रकाशनबोधार्थमधिदैवतोपदेशानन्तरम् ॥

2. यथानेन आ. ॥ 3. सङ्कल्पस्योपलक्षणत्वादिति भावः ॥

4. 'विषयीक्रियमाणमिव च' आ.। प्रत्ययसमकालिको बोध एव ब्रह्मेत्युक्ते तस्मिन् मनोवृत्तिविषयत्वं कल्प्यते मूढैरित्यतो विषयीक्रियमाणमिवेत्युक्तिः। सर्ववृत्तिसाक्षिभूतम् इत्यर्थः ॥

5. 'प्रतिबोधविदितम्' (२–४) इत्यस्य व्याख्याने स्पष्टीकृतमिदं भाष्ये ॥

6. यथा विद्युतः प्रकाशो युगपद्विश्वव्यापकस्तथा निरतिशयज्योतीरूपं द्रुतं सकलसृष्ट्यादिकारि परमैश्वर्यसंपन्नमित्युपमानार्थो निर्दिष्टः कैश्चित्। भाष्ये तु विद्युदिवात्मानं सकृद्दर्शयित्वैव द्रुतं तिरोभूतम्, सर्वप्रत्ययसाक्षि चेति वर्णितमुपनिषदनुसारेणैव ॥

7. आदिश्यतेऽनेनेत्यादेशः। तस्योपदेश आदेशोपदेशः। 'आदेश उपदेशः' इति तु वा. ॥

8. विद्युच्चक्षुर्मनोरूपोपाधिविशेषद्वारेणोपदिश्यमानमप्यविवक्षितोपाधिसंबन्धमेव ब्रह्म विवक्षितम्। उपाध्युपादानं तु साधारणबुद्ध्यनुग्रहायेत्यभिप्रायः ॥

### ब्रह्मण उपासनोपदेशः--

## तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाभि हैनᳪं सर्वाणि भूतानि संवाञ्छन्ति ॥ ६ ॥

### 'तद्वनम्' इति गुणाभिधानेनोपासितव्यं ब्रह्म--

६१. किं च तद्ब्रह्म ह किल तद्वनं नाम। तस्य वनं तद्वनम्। तस्य प्राणिजातस्य प्रत्यगात्मभूतत्वात्[1] वनं[2] वननीयं सम्भजनीयम्। अतः तद्वनं नाम प्रख्यातं ब्रह्म तद्वनमिति यतः। तस्मात् 'तद्वनम्' इत्यनेनैव गुणाभिधानेन उपासितव्यं चिन्तनीयम्[3]। अनेन नाम्ना[4] उपासनस्य[5] फलमाह। स यः कश्चित् एतद्यथोक्तं ब्रह्म एवं यथोक्तगुणं वेद उपास्ते अभि ह एनम् उपासकं सर्वाणि भूतानि अभिसंवाञ्छन्ति[6] ह प्रार्थयन्त एव, यथा ब्रह्म[7] ॥

### उपनिषदुपसंहारः

## उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ७ ॥

### शिष्यप्रश्नः--

६२. एवमनुशिष्टः शिष्य आचार्यमुवाच। उपनिषदं

1. आत्मनः परमप्रेमास्पदत्वात्संभजनीयत्वमुपपन्नमिति भावः ॥
2. एतत्पदं नास्ति आ. ॥
3. 'चिन्तनीयमिति' आ. ॥
4. नाम्नेत्युपलक्षणं तद्गुणवत्त्वेनेत्यपि द्रष्टव्यम् ॥
5. 'उपासनस्य' वा. ॥
6. अभीत्यस्य अनेन संबन्ध इति दर्शयितुम् अभिसंवाञ्छन्तीति पुनरुक्तिः ॥
7. परमार्थतस्तस्य ब्रह्माभिन्नत्वान्नैतच्चित्रमिति भावः ॥



रहस्यं यच्चिन्त्यं भो भगवन् ब्रूहि इति। एवमुक्तवति शिष्ये आह आचार्यः। उक्ता अभिहिता ते तव उपनिषत्। का पुनः सेति? आह। ब्राह्मीं ब्रह्मणः परमात्मन इयं ब्राह्मी[1]। ताम्। परमात्मविषयत्वादतीतविज्ञानस्य[2]। वाव एव ते उपनिषदम् अब्रूमेति। उक्तामेव परमात्मविषयाम्[3] 'उपनिषदमब्रूम' इत्यवधारयत्युत्तरार्थम्[4] ॥

### उक्तोपनिषत् साधननिरपेक्षैवामृतत्वाय

### शिष्यप्रश्नाभिप्रायः--

६३. परमात्मविषयाम् उपनिषदं श्रुतवतः 'उपनिषदं भो ब्रूहि' इति पृच्छतः शिष्यस्य कोऽभिप्रायः? यदि तावत् श्रुतस्यार्थस्य प्रश्नः' कृतः, ततः पिष्टपेषणवत् पुनरुक्तोऽनर्थकः प्रश्नः स्यात्। अथ सावशेषा उक्तोपनिषत् स्यात्, ततस्तस्याः फलवचनेनोपसंहारो न युक्तः। 'प्रेत्यास्माल्लोकादमृता भवन्ति' (२-५) इति। तस्मात् उक्तोपनिषच्छेषविषयोऽपि प्रश्नोऽनुपपन्न एव। अनवशेषितत्वात्। कस्तर्हि अभिप्रायः प्रष्टुरिति? उच्यते। किं पूर्वोक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तरापेक्षा अथ निरपेक्षैव। सापेक्षा चेत्, अपेक्षितविषयामुपनिषदं ब्रूहि। अथ निरपेक्षा चेत् अवधारय पिप्पलादवत् 'नातः परमस्ति[5]' (प्र. ६-७) इत्येवमभिप्राये[6] एतदुपपन्नमाचार्यस्यावधारणवचनम् 'उक्ता त उपनिषत्' इति ॥

1. 'ब्राह्मी' इति नास्ति वा. ॥
2. यदिदं ब्रह्मविज्ञानं निरुपाधिकं तस्य ब्रह्मविषयत्वाद्ब्राह्मीमिति तस्यैवावधारणमिदं नान्यास्त्युपनिषदिति। उपासनापि तद्वनमिति तद्विषया गृहीतोपनिषच्छब्देन। परं तु न प्राधान्यत इति भाष्यचर्चाग्रन्थतोऽवगम्यते ॥
3. 'परमात्मविद्याम्' आ. ॥
4. तपआदीनामुपायानां विधानार्थमित्यर्थः ॥
5. 'अस्तीति'- इत्येक इतिरत्रापेक्षित इति भाति ॥
6. 'एवमभिप्रायः' इति मुद्रितकोशपाठाद्वरमेष एवाङ्गीकृतः ॥

उक्ता त उपनिषदिति सावधारणं प्रतिवचनम्—

६४. ननु नावधारणमिदम्। यतोऽन्यद्वक्तव्यमाह[1] 'तस्यै तपो दमः' (४-८) इत्यादि। सत्यम्, वक्तव्यमुच्यत आचार्येण। न तूक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तराभिप्रायेण वा। किं तु ब्रह्मविद्याप्राप्त्युपायाभिप्रायेण[2]। वेदैस्तदङ्गैश्च सह पाठेन समीकरणात् तपःप्रभृतीनाम्। न हि वेदानां शिक्षाद्यङ्गानां च साक्षाद् ब्रह्मविद्याशेषत्वं तत्सहकारिसाधनत्वं वा संभवति[3]। सहपठितानामपि यथायोगं विभज्य विनियोगः स्यादिति चेत्। यथा सूक्तवाकानुमन्त्रणमन्त्राणां यथादैवतं विभागः, तथा तपोदमकर्मसत्यादीनामपि ब्रह्मविद्याशेषत्वं तत्सहकारिसाधनत्वं वेति कल्प्यते। वेदानां तदङ्गानां च अर्थप्रकाशकत्वेन कर्मात्मज्ञानोपायत्वमिति[4]। एवं ह्ययं विभागो युज्यतेऽर्थसंबन्धोपपत्तिसामर्थ्यादिति चेत्[5]। न। अयुक्तेः। न ह्ययं विभागो घटनां प्राञ्चति। न हि सर्वक्रियाकारकफलभेदबुद्धितिरस्कारिण्या

1. 'वक्तव्यमित्याह' आ. ॥

2. कर्म विद्याया न शेषः, न फलोपकार्यङ्गम्। नापि तत्सहकारि, न तेन सह समुच्चितं फलदातृ। किं तु तत्प्राप्त्युपायमात्रम् ॥

3. न हि साङ्गवेदाध्ययनं ज्ञानफलोपकार्यङ्गम्, ज्ञानसमुच्चितमनुष्ठितं तत्फलोत्पत्तिकारणं वा। किं तु विविदिषाप्राप्त्यादिद्वारा तदुपायमात्रमिति सर्वसंमतमेतत्। तत्सहपठितत्वात्तपःप्रभृतीनामपि तत्समानयोगक्षेमतेत्यवगम्यत इत्यभिप्रायः ॥

4. कर्मोपायत्वमात्मज्ञानोपायत्वं चेत्यर्थः ॥

5. यद्यपि यागसमाप्तौ पठितव्ये सूक्तवाके बह्व्यो देवताः पठ्यन्ते, तथापि यस्मिन् यागे पौर्णमास्याममावास्यायां वा या देवता आहूता तस्या एव विसर्जने सूक्तवाको विनियुज्यते योग्यतावशात् इति (जै. सू. ३-२-१६, १७, १८) पूर्वमीमांसायां निर्णीतम्। तथेहापि वेदानामङ्गानां चोपायत्वेन विनियोगेऽपि तपःप्रभृतीनां योग्यतावशादेव ज्ञानशेषत्वेन तत्सहकारित्वेन वा विनियोगोऽस्त्विति शङ्कितुराशयः ॥



ब्रह्मविद्यायाः शेषापेक्षा सहकारिसाधनसंबन्धो वा युज्यते[1]। सर्वविषयव्यावृत्तप्रत्यगात्मविषयनिष्ठत्वाच्च ब्रह्मविद्यायाः, तत्फलस्य च निःश्रेयसस्य[2]। 'मोक्षमिच्छन् सदा कर्म त्यजेदेव ससाधनम्। त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥[3]' (?) तस्मात् कर्मणां सहकारित्वं कर्मशेषापेक्षा वा न ज्ञानस्योपपद्यते, ततोऽसदेव सूक्तवाकानुमन्त्रणवद् यथायोगं विभाग इति। तस्मादवधारणार्थैव प्रश्नप्रतिवचनस्योपपद्यते। एतावत्येवेयमुपनिषदुक्ता अन्यनिरपेक्षा अमृतत्वायेति[4] ॥

## ज्ञानसाधनानि

**तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् ॥८॥**

तप आदीनां ज्ञानोपायता—

६५. यामिमां ब्राह्मीमुपनिषदं[5] तवाग्रेऽब्रूमेति तस्यै तस्या उक्ताया उपनिषदः प्राप्त्युपायभूतानि[6] तपआदीनि। तपः कायेन्द्रिय-

1. क्रियाकारकफलभेदबुद्धिं पुरस्कृत्य तपआदीनि प्रवर्तन्ते। तादृशबुद्धितिरस्कारिणी तु ब्रह्मविद्या। तत्कथमनयोर्विरुद्धस्वभावयोः साङ्गत्यम्? न च विद्या विधिलक्षणा, स्वविषयाविद्यातिरस्करणे सहायान्तरापेक्षिणी वा दृष्टा। तत्कथं ब्रह्मविद्यायाः कर्मापेक्षेति भावः ॥ सू. भा. १-१-४, ३-४-१६.

2. ज्ञानाभिव्यङ्ग्यस्य प्रत्यगात्मनः ज्ञानफलस्य च प्रत्यगात्मन्यवस्थानरूपस्य मोक्षस्य नित्यत्वान्न साध्यता। अतोऽपि न विद्यायाः सहकार्याद्यपेक्षेति भावः ॥ सू. भा. १-१-४.

3. कुत्रत्यं वचनमिदमिति न विज्ञायते। संबन्धवार्तिके तु पठ्यते 'त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम्। त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम्' ॥ इति। भाष्यविश्रुतित्वेन च परामृष्टं तत्र वाक्यम् ॥

4. इतिपदं नास्ति मुद्रितपुस्तकेषु। अपेक्षितं तु ॥

5. सगुणां निर्गुणां च। विशेषतस्तु निर्गुणाम् ॥

6. बृ. ४-४-२२.

मनसां समाधानम्। दम उपशमः[1]। कर्म अग्निहोत्रादि। एतैर्हि संस्कृतस्य[2] सत्त्वशुद्धिद्वारा तत्त्वज्ञानोत्पत्तिः[3], दृष्टा हि अमृदितकल्मषस्य उक्तेऽपि ब्रह्मणि अप्रतिपत्तिः विपरीतप्रतिपत्तिश्च। यथेन्द्रविरोचनप्रभृतीनाम्[4]। **तस्मात् इह वा अतीतेषु वा बहुषु जन्मान्तरेषु[5] तपआदिभिः कृतसत्त्वशुद्धेः ज्ञानं समुत्पद्यते यथाश्रुतम्।** 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥' (श्वे. ६–२३) इति मन्त्रवर्णात्। 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः॥' (मो. ध. २०४–८) इति स्मृतेश्च[6]। इतिशब्द उपलक्षणत्वप्रदर्शनार्थः[7]। इति एवमाद्यन्यदपि[8] ज्ञानोत्पत्तेरुपकारकम् 'अमानित्वमदम्भित्वम्' (गी. १३–७) इत्याद्युपदर्शितं भवति। प्रतिष्ठा पादौ पादाविवास्याः। तेषु हि सत्सु प्रतितिष्ठति ब्रह्मविद्या; प्रवर्तते[9] पद्भ्यामिव पुरुषः। वेदाश्चत्वारः सर्वाणि चाङ्गानि शिक्षादीनि षट्, कर्मज्ञानप्रकाशकत्वाद्वेदानां तद्रक्षणार्थत्वादङ्गानां प्रतिष्ठात्वम्। अथवा प्रतिष्ठाशब्दस्य पादरूप(क)कल्पनार्थत्वात् वेदास्त्वितराणि सर्वाङ्गानि (णि ?) शिर-

1. दमशब्देनैव शमोऽपि ग्राह्यः॥
2. 'इदं मेऽनेनाङ्गं संस्क्रियते' (शत.ब्रा. ११–२–२–१३) इति श्रुतेः॥
3. 'दृष्टा' इत्यधिकं वा.॥
4. छा.॥ इन्द्रस्याप्रतिपत्तिः, विरोचनस्य विपरीतप्रतिपत्तिश्चेत्यर्थः। प्रभृतिशब्दाद् भृग्वादयो ग्राह्याः॥
5. अत एव जन्मनैव विरक्ताः केचिद् दृश्यन्ते। गी. ६–४५, ७–१९; सू. भा. ३–४–५१, ४–१–१८.
6. 'स्मृतेः' इति चशब्दरहितः पाठः आ.॥
7. 'उपलक्षण' इति त्वरहितः पाठः आ.॥
8. सत्यबलाप्रमादसंन्यासादि। मु. ३–१–५, ३–२–४.
9. 'प्रवर्तते च' इत्येकश्चकारोऽपेक्षितोऽत्र॥



आदीनि[1]। अस्मिन् पक्षे[2] शिक्षादीनां वेदग्रहणेनैव ग्रहणं कृतं प्रत्येतव्यम्। अङ्गिनि हि[3] गृहीते अङ्गानि गृहीतान्येव भवन्ति। तदायत्तत्वादङ्गानाम्॥

**सत्यस्य विशेषत उपायत्वम्—**

६६. सत्यम् आयतनम्। यत्र तिष्ठत्युपनिषत् तदायतनम्। सत्यमिति अमायिता अकौटिल्यं वाङ्मनःकायानाम्। तेषु हि आश्रयति विद्या येऽमायाविनः साधवः, नासुरप्रकृतिषु मायाविषु। 'न येषु जिह्ममनृतं न माया च'[4] (प्र. १–१६) इति श्रुतेः। तस्मात् सत्यमायतनमिति कल्प्यते। तपआदिष्वेव प्रतिष्ठात्वेन प्राप्तस्य सत्यस्य पुनरायतनत्वेन ग्रहणं[5] साधनातिशयत्वज्ञापनार्थम्। 'अश्वमेधसहस्रं च सत्यं च तुलया धृतम्। अश्वमेधसहस्राच्च सत्यमेकं विशिष्यते॥' (आदि. ७४–१०३) इति स्मृतेः॥

## ब्रह्मविद्याफलोपसंहारः

# यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥९॥

६७. यो वै एतां ब्रह्मविद्याम् 'केनेषितम्' (१–१) इत्यादिना यथोक्तां एवं महाभागाम्, 'ब्रह्म ह देवेभ्यः' (३–१) इत्यादिना[6] स्तुतां सर्व-

1. प्रथमपक्षे तपोदमकर्मणां सह वेदैः साङ्गैः प्रतिष्ठात्वम्, द्वितीये तु तपआदित्रयस्य पादत्वं वेदानां तु साङ्गानां शिरआदित्वमिति विशेषः॥
2. अङ्गशब्दस्य शिरआद्यवयवत्वकल्पनपक्षे॥
3. 'हि' इति नास्ति आ.॥
4. यद्यपीदं सगुणब्रह्मविद्याविषयं वचनम्, निर्गुणायामपि समानन्यायेनेदमन्वेतीत्युदाहृतम्॥
5. इतिशब्दस्योपलक्षणार्थत्वात्सत्यस्यापि प्रतिष्ठात्वेन प्राप्तस्य पुनर्ग्रहणम्॥
6. 'इत्यादिस्तुतां' इति आ.॥

विद्याप्रतिष्ठां[1] वेद[2]। 'अमृतत्वं हि विन्दते' (२-४) इत्युक्तमपि[3] ब्रह्मविद्याफलमन्ते निगमयति[4]। अपहत्य पाप्मानम् अविद्याकामकर्मलक्षणं संसारबीजं विधूय, अनन्ते अपर्यन्ते स्वर्गे[5] लोके। सुखात्मके ब्रह्मणीत्येतत्। 'अनन्ते' इति विशेषणान्न त्रिविष्टपे[6]। अनन्तशब्द औपचारिकोऽपि स्यात्[7] इत्यत आह 'ज्येये' इति। ज्येये ज्यायसि, सर्वमहत्तरे स्वात्मनि मुख्य एव[8] प्रतितिष्ठति। न पुनः संसारमापद्यत इत्यभिप्रायः॥

इति चतुर्थः खण्डः

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ केनोपनिषद्भाष्यं संपूर्णम्



1. सर्वविद्याभिव्यक्तिहेतुत्वात्, सर्वविद्यावेद्यवस्तुज्ञापकत्वाद्वा सर्वविद्याप्रतिष्ठाम्। मु॰ भा. १-१-१.

2. इतःपूर्वम् 'एवं' इत्यपेक्षितं मूलानुसारेणेति भाति॥

3. तद्वनमित्युपासितव्यमित्युपासनाया अप्युक्तत्वात्तत्परतैव सर्वस्या उपनिषद इति माभून्मतिर्जिज्ञासूनामिति तस्या निर्गुणविद्यापरतामाविष्कर्तुं पूर्वोक्तमपि निर्गुणविद्याफलमुपसंहारे पुनरुच्यते। सगुणविद्याया अपि क्रममुक्त्यर्थत्वात्तस्या अप्येतत्फलमित्यनुसंधेयम्॥

4. 'निगमयते' इति आ.॥ 5. निरतिशयसुखरूपे॥

6. त्रिविष्टपस्य स्वर्गस्य पुण्यक्षयानन्तरमुपभोगप्रदत्वाभावादित्यर्थः॥

7. 'अनन्तमेव स तेन लोकं जयति' (बृ. ३-१-९) इत्यादौ तथा दर्शनादिति भावः॥

8. वस्तुत एवानन्ते, कालादिपरिच्छेदरहिते इत्यर्थः। एतेन कल्पान्तस्थायि ब्रह्मलोकस्यापि व्यावृत्तिः॥

केनभाष्यस्य रचितं येनेरितमिदं शुभम्।
टिप्पणं बालबोधार्थं स प्रसीदतु शङ्करः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीशङ्करभगवच्चरणस्मरणपरिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यश्रीसच्चिदानन्देन्द्रसरस्वतीत्याख्येन भिक्षुणा प्रणीतं केनोपनिषद्भाष्यटिप्पणम्

ॐ तत्सत्

॥ ॐ ॥

श्रीमच्छाङ्कर(वाक्य)भाष्यसंयुता

# केनोपनिषत्

## भाष्यकारस्य अवतरणिका

### वृत्तवर्तिष्यमाणसंबन्धः

१. समाप्तं कर्मात्मभूतप्राणविषयं विज्ञानम्, कर्म च अनेकप्रकारम्। ययोर्विकल्पसमुच्चयानुष्ठानाद् दक्षिणोत्तराभ्यां सृतिभ्याम् आवृत्त्यनावृत्ती भवतः। अत ऊर्ध्वं फलनिरपेक्षज्ञानकर्मसमुच्चयानुष्ठानात् कृतात्मसंस्कारस्य उच्छिन्नात्मज्ञानप्रतिबन्धकस्य द्वैतविषयदोषदर्शिनो निर्ज्ञाताशेषबाह्यविषयत्वात् संसारबीजमज्ञानमुच्चिच्छित्सतः प्रत्यगात्मविषयजिज्ञासोः 'केनेषितम्' इति आत्मस्वरूपतत्त्वविज्ञानाय अयमध्याय आरभ्यते। तेन च मृत्युपदम् अज्ञानम् उच्छेत्तव्यम्। तत्तन्त्रो हि संसारो यतः। अनधिगतत्वादात्मनो युक्ता तदधिगमाय तद्विषया जिज्ञासा॥

### कर्मकाण्डे आत्मतत्त्वानुक्तिः कर्मज्ञानयोर्विरोधात्

२. कर्मविषये चानुक्तिस्तद्विरोधित्वात्। अस्य विजिज्ञासितव्यस्य आत्मतत्त्वस्य कर्मविषयेऽवचनम्। कस्मादिति[1] चेत्। आत्मनो हि यथावद् विज्ञानं कर्मणा विरुध्यते। निरतिशयब्रह्मस्वरूपो ह्यात्मा विजिज्ञापयिषितः। 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदम्....' (१-४) इत्यादिश्रुतेः। न हि स्वाराज्येऽभिषिक्तो ब्रह्मत्वं गमितः कञ्चन नमितु[2]-

1. 'अवचनं कस्मादिति चेत्' इत्येकं वाक्यम् वा॥

2. अत्रेडागमः कथमिति चिन्त्यम्॥

मिच्छति। अतो ब्रह्मास्मीति संबुद्धो न कर्म कारयितुं शक्यते। न हि आत्मानम् अवाप्तार्थं ब्रह्म मन्यमानः प्रवृत्तिं प्रयोजनवतीं पश्यति। न च निष्प्रयोजना प्रवृत्तिः'। अतो विरुध्यत एव कर्मणा ज्ञानम्। अतः कर्मविषयेऽनुक्तिः। विज्ञानविशेषविषयैव जिज्ञासा ॥

## निष्कामस्य संस्कारार्थं कर्म

३. कर्मानारम्भ इति चेत्। न। निष्कामस्य संस्कारार्थत्वात्[2]। यदि हि आत्मविज्ञानेन आत्माविद्याविषयत्वात् परितित्याजयिषितं कर्म ततः 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्,'[3] (?) इत्यनारम्भ एव कर्मणः श्रेयान्। अल्पफलत्वात्, आयासबहुलत्वात्, तत्त्वज्ञानादेव च श्रेयःप्राप्तेः, इति चेत्। सत्यमेतत्[4]। अविद्याविषयं कर्म, अल्पफलत्वादिदोषवद् बन्धरूपं च सकामस्य। 'कामान् यः कामयते' (मुं. ३-२-२) 'इति नु कामयमानः' (बृ. ४-४-६) इत्यादिश्रुतिभ्यः। न निष्कामस्य। तस्य तु संस्कारार्थान्येव कर्माणि भवन्ति तन्निर्वर्तकाश्रय[5]प्राणविज्ञानसहितानि। 'देवयाजी श्रेयानात्मयाजी वा'[6] इत्युपक्रम्य 'आत्मयाजी तु करोति इदं मेऽनेनाङ्गं संस्क्रियते' (शत. ब्रा. मा. ११-२-

1. अत्र ज्ञाने सति क्रियाकारकफलोपमर्द एव भवतीति विरोधसाधिका प्रबलयुक्तिर्भाष्ये सर्वत्र दृश्यमाना कुतो न विन्यस्तेति न विज्ञायते ॥

2. चेदन्तशङ्कातत्परिहारयोः समावेशः संग्रहवाक्ये तावत्, विवरणं तु परस्तादिति शैलीयं वाक्यभाष्यासाधारणी ॥

3. श्लोकार्धमिदं कुत्रत्यमिति न ज्ञायते। 'प्रक्षालनाद्धि पङ्कस्य श्रेयो न स्पर्शनं नृणाम्' इति तु महाभारते (वन. २-४९) दृश्यते ॥

4. 'सत्यम्। एतदविद्याविषयं...' इति मुद्रितपुस्तकेषु ॥

5. 'तन्निर्वर्तकप्राण' इति वा ॥ टीकायां तु आश्रयपदमपि संगृहीतम् ॥

6. शतपथब्राह्मणे माध्यन्दिनपाठे तु- 'आत्मयाजी श्रेया३न् देवया३जी इति। आत्मयाजीति ह ब्रूयात्। स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियते इदं मेऽनेनाङ्गमुपधीयत इति' इत्येवोपलभ्यते ॥



२-१३) इति संस्कारार्थमेव कर्मणीति वाजसनेयके। 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।' (मनु. २-२८), 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्।' (गी. १८-५) इत्यादिस्मृतेश्च। प्राणादिविज्ञानं च केवलं कर्मसमुच्चितं वा सकामस्य प्राणात्मप्राप्त्यर्थमेव भवति। निष्कामस्य तु आत्मज्ञानप्रतिबन्धनिर्माष्ट्यै[1] भवति। आदर्शनिर्माजनवत् ॥

## उत्पन्नात्मज्ञानस्य न कर्मारम्भः

४. उत्पन्नात्मविद्यस्य तु अनारम्भः। निरर्थकत्वात्। 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते। तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥' (मो. ध. २४२-७), 'क्रियापथश्चैव पुरस्तात् संन्यासश्च। तयोः संन्यास एवात्यरेचयत्' (?)[2] इति। 'त्यागेनैके' (तै. ना. २८), 'नान्यः पन्था विद्यते' (श्वे. ३-८) इत्यादिश्रुतिभ्यश्च। न्यायाच्च। उपायभूतानि हि कर्माणि संस्कारद्वारेण ज्ञानस्य। ज्ञानेन त्वमृतत्वप्राप्तिः। 'अमृतत्वं हि विन्दते' (२-४), 'विद्यया विन्दतेऽमृतम्' (२-४) - इत्यादिश्रुतिस्मृति[3](?)भ्यश्च। न हि नद्याः पारगो नावं न मुञ्चति यथेष्टदेशगमनं प्रति स्वातन्त्र्ये सति। न हि स्वभावसिद्धं वस्तु सिषाधयिषति साधनैः। स्वभावसिद्धश्चात्मा। तथा नापिपयिषितः (?)[4]। आत्मत्वे सति नित्याप्तत्वात्। नापि विचिकारयिषितः। आत्मत्वे सति नित्यत्वात्, अविकारित्वात्, अविषयत्वात्, अमूर्तत्वाच्च। श्रुतेश्च

1. 'प्रतिबन्धकनिर्मृष्ट्यै' वा ॥

2. अत्र स्मृतिरेव श्रुतेः प्राक्किमित्युदाहृतेति न जानीमः। इयं श्रुतिरीशावास्येऽपि द्वितीयमन्त्रभाष्ये समुदाहृता। बृ. भाष्ये (४-५-१५) च। आकरस्तु न विज्ञायते। 'संन्यासपथ एव' इति तु ईशावास्ये। अतः किमर्थंतः पठिता श्रुतिरित्यप्यवगन्तुं न पारयामः। अन्त्यः इतिशब्दः किमर्थ इति चिन्त्यम् ॥

3. स्मृतिवचनमत्र नोदाहृतम् ॥

4. इदं पूर्ववाक्येन नाञ्जसा अन्वेति। 'स्वभावसिद्धश्चाऽऽत्मा' इति हि असिषाधयिषितत्वे हेतुत्वेनोपन्यस्तमिति ॥

'न वर्धते कर्मणा' (बृ. ४–४–२३) इत्यादि[1]। स्मृतेश्च 'अविकार्योऽय-मुच्यते' (गी. २–२५) इति। न च संचिस्कीर्षितः। 'शुद्धमपापविद्धम्' (ई. ८) इत्यादिश्रुतिभ्यः। अनन्यत्वाच्च। अन्येनान्यत् संस्क्रियते। न चात्मनोऽन्यभूता क्रिया अस्ति। न च स्वेनैवाऽऽत्मना स्वमात्मानं संचिस्कीर्षेत्। न च वस्त्वन्तराधानं नित्य[2](?)प्राप्तिर्वा वस्त्वन्तरस्य नित्या। नित्यत्वं चेष्टं मोक्षस्य। अत उत्पन्नविद्यस्य कर्मारम्भोऽनुपपन्नः॥

५. अतो व्यावृत्तबाह्यबुद्धेरात्मविज्ञानाय 'केनेषितम्' इत्या-द्यारम्भः॥

---

1. 'श्रुतेश्च' इत्यनेन 'इत्यादि' इति नान्वेति। 'इत्यादिश्रुतेः' इति वा भाव्यम्, 'श्रुतिश्च' इत्युपक्रम्य 'इत्याद्या' इत्यन्तेन वा वाक्येन भाव्यम्॥

2. नित्यप्राप्तिर्न नित्येत्यस्यानर्थकत्वात्, प्राप्तिर्वा इत्येतावदेवालमिति भाति। इदं च वाक्यं संस्कार्यत्वाभावोपपत्तिं कथं समर्पयतीति चिन्तनीयम्॥



# अथ प्रथमः खण्डः

## शिष्यस्य प्रश्नः

( उपनिषत् )

केनेषितं ............ देवो युनक्ति ॥ १ ॥

## चेतनविशेषबुभुत्सोः प्रश्नः

६. प्रवृत्तिलिङ्गाद् विशेषार्थः प्रश्न उपपन्नः। रथादीनां हि चेतनावदधिष्ठितानां प्रवृत्तिर्दृष्टा नानधिष्ठितानाम्। मनआदीनां च अचेतनानां प्रवृत्तिर्दृश्यते। तद्धि लिङ्गं चेतनावतोऽधिष्ठातुरस्तित्वे। करणानि हि मनआदीनि नियमेन प्रवर्तन्ते तन्नासति चेतनावत्यधिष्ठातरि उपपद्यते। तद्विशेषस्य चानधिगमात् चेतनावत्सामान्ये[1] चाधिगते विशेषार्थः प्रश्न उपपद्यते[2]॥

## प्रश्नमन्त्रव्याख्यानम्

७. केनेषितं केनेष्टं कस्येच्छामात्रेण मनः पतति गच्छति स्वविषये नियमेन व्याप्रियते इत्यर्थः। मनुते अनेनेति विज्ञाननिमित्तम् अन्तःकरणं मनः। प्रेषितमिव इत्युपमार्थः। न त्विषितप्रेषितशब्दयो-र्र्थाविह संभवतः। न हि शिष्यानिव मनआदीनि विषयेभ्यः प्रेषय-त्यात्मा। विविक्तनित्यचित्स्वरूपतया तु निमित्तमात्रं प्रवृत्तौ। नित्य-चिकित्साधिष्ठातृवत्[3]॥

---

1. 'चेतनावत्यधिष्ठातृसामान्ये' वा॥

2. कीदृशश्चेतनः, किं कार्यकरणसङ्घातसंहतः, किं वा असंहतः कश्चि-दिति प्रश्नः॥

3. दृष्टान्तेन किं विवक्षितमिति नावगम्यते। 'विषयग्रहणार्थं नित्य-चिकित्सायामधिष्ठातुश्चकोरस्य संनिधिमात्रेण यथा राजभोजनादिप्रवृत्तिनिमि-त्तत्वं तद्वत्' इति टीका। प्रस्थानत्रयभाष्ये नान्यत्र दृष्टमिदमुदाहरणम्॥

'प्राणः' इति नासिकाभवः। प्रकरणात्[1] । प्रथमत्वं चलनक्रियायाः[2] प्राणनिमित्तत्वात्। स्वतो विषयावभासमात्रं करणानां प्रवृत्तिः। चलिक्रिया तु प्राणस्यैव मनआदिषु। तस्मात् प्राथम्यं प्राणस्य। प्रैति गच्छति युक्तः। प्रयुक्त इत्येतत् ॥

वाचो वदनं[3] किंनिमित्तं प्राणिनां चक्षुःश्रोत्रयोश्च को देवः प्रयोक्ता? करणानामधिष्ठाता चेतनावान् यः स किंविशेषण इत्यर्थः ॥

## गुरोरुत्तरम्

(उपनिषत्)

श्रोत्रस्य श्रोत्रं ............ भवन्ति ॥ २ ॥

## प्रतिवचनतात्पर्यम्

८. 'श्रोत्रस्य श्रोत्रम्' इत्यादि प्रतिवचनं निर्विशेषस्य निमित्तत्वार्थम्। विक्रियादविशेषरहितस्य आत्मनो मनआदिप्रवृत्तौ निमित्तत्वम् इत्येतत् 'श्रोत्रस्य श्रोत्रम्' इति प्रतिवचनस्यार्थः। अनुगमात्। तदनुगतानि हि अत्रास्मिन्नर्थे[4] अक्षराणि ॥

## निर्विशेषचैतन्यस्यैव करणप्रवृत्तिनिमित्तत्वम्

९. कथम्? शृणोत्यनेनेति श्रोत्रम्। तस्य शब्दावभासकत्वं श्रोत्रत्वम्। शब्दोपलब्धृरूपतया अवभासकत्वं न स्वतः। श्रोत्रस्याचिद्रूपत्वात्। आत्मनश्च चिद्रूपत्वात्। यत् श्रोत्रस्योपलब्धृत्वेनावभासकत्वम्, तत्[5] आत्मनिमित्तत्वात् 'श्रोत्रस्य श्रोत्रम्' इत्युच्यते। यथा क्षत्रस्य

1. इन्द्रियाणां हि प्रकरणमिदम् ॥

2. 'प्रथमत्वं च क्रियया:' वा ॥ 3. 'वचनं' वा ॥

4. 'अनुगतानि ह्यस्मिन्नर्थे' वा ॥

5. यत् श्रोत्रस्य शब्दोपलब्धृत्वेन तदवभासकत्वम्, तस्य आत्मनिमित्तत्वात् 'श्रोत्रस्य श्रोत्रम्' इत्युच्यते आत्मा इति शेषः। अत्र 'तत्' इति तस्येत्यर्थे अव्ययमिति, तस्येत्येतदेव प्रमादात् 'तत्' इति लिखितम् इति वा कथञ्चित् व्याख्येयम् ॥



क्षत्रम्[1] । यथा वा उदकस्यौष्ण्यम् अग्निनिमित्तमिति दग्धुरप्युदकस्य दग्धा अग्निरुच्यते। उदकमपि ह्यग्निसंयोगादग्निः[2] रुच्यते। तद्वत्। अनित्यं यत्संयोगादुपलब्धृत्वं[3] तत्करणं श्रोत्रादि, उदकस्येव दग्धृत्वम्। अनित्यं हि तत्र तत्। यत्र तु नित्यमुपलब्धृत्वम्, अग्नाविवौष्ण्यम्, स नित्योपलब्धिस्वरूपत्वात् दग्धेव[4] 'उपलब्धा' उच्यते। श्रोत्रादिषु श्रोतृत्वाद्युपलब्धिरनित्या। नित्या चात्मनि। अतः 'श्रोत्रस्य श्रोत्रम्' इत्याद्यक्षराणाम् अर्थानुगमात् उपपद्यते निर्विशेषस्योपलब्धिस्वरूपस्य आत्मनो मनआदिप्रवृत्तिनिमित्तत्वमिति। मनआदिष्वेवं यथोक्तम्[5] ॥

'वाचो ह वाचम्', 'प्राणस्य प्राणः' इति विभक्तिद्वयं सर्वत्रैव[6] द्रष्टव्यम्। कथम्? पृष्टत्वात् स्वरूपनिर्देशः। प्रथमयैव च निर्देशः। तस्य च[7] ज्ञेयत्वात्[8] कर्मत्वमिति द्वितीया[9] । अतो वाचो ह वाचं प्राणस्य प्राण इत्यस्मात् सर्वत्रैव विभक्तिद्वयम्[10] ॥

1. यथा 'तदेतत्क्षत्रस्य क्षत्रं यद्धर्मः' (बृ. १-४-१४) इत्यत्र नियन्तृत्वात् क्षत्रस्य स्वान्यनियन्तृत्वे निमित्तमिति क्षत्रस्य क्षत्रमित्युच्यते धर्मः तद्वत्, इति भावः ॥ 2. 'दग्धृ' इत्युच्यते इत्यर्थः ॥

3. अस्यानन्तरं 'यत्र' इत्यध्याहार्यम्, लेखकप्रमादात्त्रुटितं वेति 'यत्र तु' इत्युत्तरत्रोपलम्भादनुमीयते। यत्संयोगात् येनात्मना संयोगात् सांनिध्यरूपात् अनित्यं शब्दाद्युपलब्धृत्वं यत्र श्रोत्रादौ प्रतीयते तत्करणम् इत्यर्थः। 'उपलब्धृत्वम्' इति करणस्यैव सतः स्वव्यापारे कर्तृत्वादिति द्रष्टव्यम्। सर्वकारकाणामेव स्वस्वव्यापारेषु कर्तृत्वस्यावश्यंभावात् ॥

4. वह्निरिति शेषः ॥ 5. 'मनसो मनः' इत्यादिकम् इत्यर्थः ॥

6. 'सर्वत्रैवं' इति वा ॥ 7. आत्मचैतन्यस्य च ॥

8. श्रोत्रादेरिति शेषः ॥

9. आत्मचैतन्यस्य पृष्टत्वात् स्वरूपनिर्देशार्थं प्रथमाविभक्तिरित्येका विभक्तिः। तत्कर्मत्वद्योतनार्थम् षष्ठीति द्वितीयेत्येवं सर्वत्रैव विभक्तिद्वयं व्याख्येयमिति ग्रन्थकारस्याभिप्रायः स्यादिति भाति ॥

10. एवं च 'वाचम्' इत्येतस्यापि 'वाग्' इति प्रथमान्तत्वेन विपरिणामः करणीय इति भावः स्यात् ॥

१०. यदेतत् श्रोत्राद्युपलब्धिनिमित्तं[1] 'श्रोत्रस्य श्रोत्रम्' इत्यादिलक्षणं नित्योपलब्धिस्वरूपं निर्विशेषमात्मतत्त्वम्, तद्[2] बुद्ध्वा अतिमुच्य अनवबोधनिमित्ताध्यारोपितात्, बुद्ध्यादिलक्षणात् संसारोन्मोक्षणं कृत्वा, धीरा धीमन्तः प्रेत्य अस्माल्लोकात् शरीरात् प्रेत्य वियुज्य, अन्यस्मिन् अप्रतिसंधीयमाने निर्निमित्तत्वात्[3] अमृता भवन्ति। सति ह्यज्ञाने कर्माणि शरीरान्तरं प्रतिसंदधते। आत्मावबोधे तु सर्वकर्मारम्भनिमित्ताज्ञानविपरीतविद्याग्निविप्लुष्टत्वात् कर्मणाम्[4] इति[5] अनारम्भे अमृता एव भवन्ति। शरीरादिसंतानाविच्छेदप्रतिसंधानाद्यपेक्षया अध्यारोपितमृत्युवियोगात् पूर्वमप्यमृताः[6] सन्तो नित्यात्मस्वरूपत्वात् 'अमृता भवन्ति' इत्युपचर्यते ॥ २ ॥

(उपनिषत्)

न तत्र चक्षुर्गच्छति .......... यथैतदनुशिष्यात् ॥ ३ ॥

११. 'न तत्र चक्षुर्गच्छति' इति उक्तेऽपि पर्यनुयोगे हेतुरप्रतिपत्तेः। 'श्रोत्रस्य श्रोत्रम्' इत्यादिना उक्तेऽप्यात्मतत्त्वे अप्रतिपन्नत्वात् सूक्ष्मत्वहेतोर्वस्तुनः पुनः पुनः पर्यनुयुयुक्षा[7] कारणमाह- न तत्र चक्षुर्गच्छतीति ॥

1. श्रोत्रादेः शब्दाद्युपलब्धौ निमित्तम्- इत्यर्थः ॥
2. 'तत्' इत्येतत् पूर्वत्र 'लक्षणं' इत्यस्यानन्तरम् वा ॥
3. कर्मनिमित्ताभावादित्यर्थोऽवसीयते वाक्यशेषबलात् ॥
4. कर्मनिमित्ताज्ञानस्य विद्यया दग्धत्वात् कर्मणामपि दग्धत्वम् इति व्याख्येयम्। 'सर्वकर्मारम्भनिमित्तस्याज्ञानस्य विपरीतविद्याग्निना विप्लुष्टत्वात्' इति पाठो यदि विद्येत तर्हि न कोऽप्यातङ्कः ॥
5. अनपेक्षितोऽयं शब्दः। अन्तरेणापीमं वाक्यस्य निराकाङ्क्षं बोधजनकत्वात् ॥
6. विदेहमुक्तिरुपचारेणैवेत्यभिप्रायः। जीवतोऽप्यशरीरत्वस्य विद्वद्दृष्ट्या सिद्धत्वात् ॥
7. शिष्यकृत पुनः पुनः पर्यनुयोगवचनाभावे कथमेवं संबन्धः स्यादिति न विज्ञायते ॥



तत्र श्रोत्राद्यात्मभूते चक्षुरादीनि[1]। वाक्चक्षुषोः सर्वेन्द्रियोपलक्षणार्थत्वात्[2]। न विज्ञानमुत्पादयन्ति। सुखादिवत् तर्हि गृह्येतान्तःकरणेन। अत आह नो मनः। न सुखादिवन्मनसो विषयस्तत्। इन्द्रियाविषयत्वात्[3]। न विद्मो न विजानीमः, अन्तःकरणेन। यथा एतद् ब्रह्म मनआदिकरणजातम् अनुशिष्यात् अनुशासनं कुर्यात्। प्रवृत्तिनिमित्तं यथा भवेत् तथा[4]। अविषयत्वान्न विद्मो न विजानीमः ॥

अथवा 'श्रोत्रादीनां श्रोत्रादिलक्षणं ब्रह्म विशेषेण दर्शय' इत्युक्त आचार्य आह- न शक्यते दर्शयितुम्। कस्मात्? 'न तत्र चक्षुर्गच्छति' इत्यादि पूर्ववत् सर्वम्। अत्र तु विशेषः 'यथैतदनुशिष्यात्' इति। यथैतदनुशिष्यात् प्रतिपादयेत्, अन्योऽपि शिष्यान् इतोऽन्येन विधिना[5] इत्यभिप्रायः ॥ ३ ॥

## विदिताविदिताभ्यामन्यदेव ब्रह्म

अन्यदेव ......... येनस्तद्व्याचचक्षिरे ॥ ४ ॥

## विदितादन्यद् ब्रह्म

१२. सर्वथापि ब्रह्म बोधय इत्युक्त आचार्य आह 'अन्यदेव तद्विदितादथो अविदितादधि' इति आगमम्[6]। विदिताविदिताभ्याम्

1. 'चक्षुः' इत्यस्य व्याख्यानमेतत् ॥
2. 'न तत्र चक्षुर्गच्छति न वाग्गच्छति' इति मूलं सर्वज्ञानेन्द्रियकर्मेन्द्रियाणामुपलक्षणमित्यभिप्रायः ॥
3. मनसोऽपीन्द्रियत्वमुपादायैवं वचनं स्यात् ॥
4. 'एतद्ब्रह्म मनसः प्रवृत्तिनिमित्तं यथा भवेत्तथा मनआदिकरणजातं यथा अनुशासनं कुर्यात्'। इति संबन्धं प्रकल्प्य अनुशासनं कुर्यात् इत्यस्य विषयीकुर्यात् इत्यर्थः कल्पनीयः ॥
5. 'श्रोत्रस्य श्रोत्रम्' इत्येवमुपदेशतोऽन्येन प्रकारेणेत्यर्थः। सर्वविशेषरहितत्वादिति पदभाष्योक्तप्रकारेण व्याख्यातव्यमेतत् ॥
6. संप्रदायागतोपदेशम् इत्यर्थः ॥

अन्यत्[1]। यो हि ज्ञाता स एव सः[2]। सर्वात्मकत्वात्[3]। अतः सर्वात्मनो ज्ञातुर्ज्ञात्रन्तराभावाद्[4] विदितादन्यत्वम्। 'स वेत्ति वेद्यं न च तस्यास्ति वेत्ता' (श्वे. ३-१९) इति च[5] मन्त्रवर्णात्। 'विज्ञातारमरे केन विजानीयात्' (बृ. २-४-१४) इति च वाजसनेयके। अपि च व्यक्तमेव[6] विदितम्। तस्मादन्यत् इत्यभिप्रायः। यद् विदितं व्यक्तं तत् अन्यविषयत्वात्[7] अल्पम्[8], सविरोधम्,[9] ततोऽनित्यम्, तत एवानेकत्वादशुद्धम्। अत एव[10] तद्विलक्षणं ब्रह्म इति सिद्धम्॥

## अविदितादन्यद् ब्रह्म

१३. अस्तु तर्ह्यविदितम्। न। विज्ञानानपेक्षत्वात्। यद् हि अविदितं तद् विज्ञानापेक्षम्। अविदितविज्ञानाय हि लोकप्रवृत्तिः। इदं तु विज्ञानानपेक्षम्। कस्मात्? विज्ञानस्वरूपत्वात्[11]। न हि यस्य यत् स्वरूपं तत् तेन अन्यतोऽपेक्ष्यते। न च स्वत एवापेक्षा। अनपेक्षमेव सिद्धत्वात्[12]। प्रदीपः स्वरूपाभिव्यक्तौ न[13] प्रकाशान्तरम् अन्यतोऽपेक्षते स्वतो

1. 'अन्यत्त्वम्' इति आ॥ गृहीतः पाठस्तु वा॥

2. 'तत्' इति पाठो युक्ततर इति भाति। स एव ब्रह्मेत्यर्थस्य विवक्षितत्वात्॥

3. सर्वात्मत्वात् इति करहितः पाठः श्रेयानिति भाति। ब्रह्मणः सर्वेषामात्मत्वात् इति हि विवक्षितम्॥

4. एक एव हि परमात्मा सर्वस्य ज्ञाता, स कस्य ज्ञेयः स्यादिति भावः॥

5. चकारोऽनपेक्षितः। अथवा 'मन्त्रवर्णाच्च' इति भिन्नक्रमो वा॥

6. व्याकृतजगदेव॥

7. अन्येन ज्ञेयत्वात्॥

8. परिच्छिन्नम्॥

9. संभावितविरोधि॥

10. 'अत एव' इति तस्मादन्यत्वादेव विदितादन्यत्वादेव, सविरोधानित्यानेकाशुद्धविलक्षणं ब्रह्मेति व्यवहितपरामर्शकत्वेन व्याख्येयमिति भाति॥

11. अविज्ञानस्वरूपं हि घटादिकं स्वविज्ञानाय विज्ञानापेक्षमिति भावः॥

12. न हि सिद्धस्यैवापेक्षा भवतीति भावः॥

13. 'न हि प्रदीपः..... प्रकाशान्तरम्' इति भिन्नक्रमो वा॥



वा। यद् हि अनपेक्षं[1] तत् स्वत एव सिद्धम्। प्रकाशात्मकत्वात् प्रदीपस्य अन्यो[2]ऽपेक्षितोऽपि अनर्थकः स्यात्। प्रकाशे विशेषाभावात्[3]। न हि प्रदीपस्य स्वरूपाभिव्यक्तौ प्रदीपप्रकाशोऽर्थवान्[4]। न चैवम्[5] आत्मनोऽन्यत्र विज्ञानमस्ति, येन[6] स्वरूपविज्ञानेऽप्यपेक्ष्येत[7]॥

## आत्मनः स्वरूपाभिव्यक्त्यै विज्ञानान्तरानपेक्षता न प्रत्यक्षविरुद्धा

१३. विरोध इति चेत्। न। अन्यत्वात्। स्वरूपविज्ञाने विज्ञानस्वरूपत्वात् विज्ञानान्तरं नापेक्ष्यते इत्येतदसत्। दृश्यते हि विपरीतज्ञानमात्मनि सम्यग्ज्ञानं च न[8] जानाम्यात्मानमिति। श्रुतेश्च। 'तत्त्वमसि' (छां. ६-८-७), 'आत्मानमेवावेत्' (बृ. १-४-१०), 'एतं वै तमात्मानं विदित्वा' (बृ. ३-५-१) इति च सर्वत्र श्रुतिषु, आत्मविज्ञाने विज्ञानान्तरापेक्षत्वं दृश्यते। तस्मात् प्रत्यक्षश्रुति[9]विरोध

1. अभिव्यक्तौ निरपेक्षमित्यर्थः स्यात्॥

2. अन्यशब्दो नास्ति आ॥ पाठे; अपेक्षितोऽपि प्रकाशो निरर्थकः, प्रकाशात्मकत्वादेव प्रदीपस्य इति विवक्षितोऽर्थः॥

3. प्रकाशकत्वेऽपि स्वप्रकाशे विशेषाधानार्थमन्यः प्रकाशोऽपेक्षणीयः स्यादितिशङ्कापरिहारार्थैतदुक्तम्॥

4. अनर्थकः स्यादित्यस्यैव विवरणमेतत्। स्वरूपाभिव्यक्तेः स्वतःसिद्धत्वात् प्रकाशान्तरमनपेक्षणीयमित्यर्थः॥

5. एवंशब्दाभावेऽपि न क्षतिः स्यात्॥

6. 'यत्' इति त्वपेक्षितमत्र॥

7. न केवलम् आत्मनो विज्ञानस्वरूपत्वादानर्थक्यं स्याद्विज्ञानान्तरस्य, किं तर्हि नास्त्यपि विज्ञानान्तरं यदपेक्ष्येतेत्यर्थः॥

8. न इत्यनपेक्षितं पदम्। आत्मनि विपरीतज्ञानमस्ति 'अहं मनुष्यः' इत्यादिलक्षणम्। सम्यग्ज्ञानमपि भवति शास्त्राचार्योपदेशेन अहं ब्रह्मास्मीति। अतो विज्ञानरूपेऽपि तस्मिन् विज्ञानान्तरमपेक्ष्यते स्वरूपविज्ञानार्थमिति प्रत्यक्षसिद्धम् इत्यभिप्रायः॥

9. प्रत्यक्षविरोधः श्रुतिविरोधश्चेत्यर्थः॥

इति चेत्। न। कस्मात्? अन्यो हि [1][स आत्मा बुद्ध्यादि[2]कार्यकरण-सङ्घाता[3]भिमानसंतानाविच्छेदलक्षणः, अविवेकात्मकः[4], बुद्ध्याद्यवभास-प्रधानः, चक्षुरादिकरणः, नित्यचित्स्वरूपात्मान्तःसारो यत्रानित्यं विज्ञान-मवभासते, बौद्धप्रत्ययानाम् आविर्भावतिरोभावधर्मकत्वात् तद्धर्मतयैव विलक्षणमपि चावभासते। अन्तःकरणस्य मनसोऽपि मनो(?)ऽन्तर्गतत्वात् सर्वान्तरश्रुतेः (?)। अन्तर्गतेन नित्यविज्ञानस्वरूपेण आकाशवदप्रचलि-तात्मना अन्तर्गर्भभूतेन स[5] बाह्यो बुद्ध्यात्मा तद्विलक्षणः अनग्निरिवाग्नि-रर्चिभिरिवाग्नेः[6] प्रत्ययैराविर्भावतिरोभावधर्मकैर्विज्ञानाभासरूपैरनित्यै[7]: ] अनित्यविज्ञान आत्मा सुखी दुःखी इत्यभ्युपगतो लौकिकैः। अतोऽन्यो नित्यविज्ञानस्वरूपादात्मनः। तत्र हि विज्ञानापेक्षा विपरीतज्ञानत्वं[8] चोपपद्यते, न पुनर्नित्यविज्ञाने॥

---

1. [ ] एवमङ्कितभागे विद्यमानानि विशेषणानि तत्र तत्र दुरवगाहानि। तत्रत्यपदानां च क्लेशेनैवान्वयोऽवगम्यः। प्रस्थानत्रयभाष्येषु कुत्राप्यन्यत्रानुपलभ्यमाना वचनव्यक्तयश्चात्र सन्ति॥

2. 'बुद्ध्यादी'ति कार्यकरणसङ्घातस्य विशेषणं किंप्रयोजनमिति न ज्ञायते॥ 3. 'संघातात्माभिमान' वा॥

4. एतत्पर्यन्तं विशेषणद्वयमनिर्वाच्याज्ञानघटितत्वेन व्याख्यातं टीकाकारेण। 'अनिर्वाच्यमज्ञानलक्षणं चिह्नं यस्य चित्प्रतिबिम्बस्य स तथोक्तः।' 'चित्तन्त्रं ह्यनिर्वाच्यमज्ञानं चैतन्यमवच्छिद्य स्वावच्छिन्ने यथास्वरूपावभासं प्रति-बध्य मौढ्याध्यासहेतुर्भवति। तस्मादविवेकात्मको जीव उच्यते' इति च॥

5. 'स' इति वा॥ आ· पाठे तु नास्त्येतत्पदम्॥

6. अनग्निरग्निः– उदकादि। तद्धि अग्नेरर्चिभिरग्निकृत्यं दाहं करोतीति॥ एतन्नास्ति· आ॥

7· नित्यविज्ञानरूपस्यात्मनः संनिधौ तदाभासाः प्रत्यया विज्ञानशब्दवाच्या आविर्भवन्ति तिरोभवन्ति च। तैरनित्यविज्ञान आत्मा आभाति। यो जीवः सुखी दुःखी इत्यादिभिर्विशेषणैर्युक्त अभ्युपगम्यते लौकिकैरिति समुदायार्थः स्यात्॥

8. 'विपरीतज्ञानम्' इत्येतावदेवालम्॥



## आत्मनः स्वरूपाभिव्यक्त्यै विज्ञानान्तरानपेक्षता न श्रुतिविरुद्धा

१५. तत्त्वमसीति बोधोपदेशो नोपपद्यते इति चेत्। 'आत्मान-मेवावेत्' (बृ. १-४-१०) इत्येवमादीनि[1] च। नित्यबोधात्मकत्वात्। न ह्यादित्योऽन्येन प्रकाश्यते। अतस्तदर्थबोधोपदेशो[2]ऽनर्थक इति चेत्। न। लोकाध्यारोपापोहार्थत्वात्। सर्वात्मनि हि नित्यविज्ञाने बुद्ध्याद्यनित्य-धर्मा लोकैरध्यारोपिता आत्माविवेकतः। तदपोहार्थो बोधोपदेशो बोधात्मनः। तत्र च[3] बोधाबोधौ समञ्जसौ। अन्यनिमित्तत्वात्, उदक इवौष्ण्यमग्नि-निमित्तम्। रात्र्यहनी इवाऽऽदित्यनिमित्ते लोके। नित्यौ औष्ण्यप्रकाशौ अग्न्यादित्ययोः अन्यत्र भावाभावयोः सनिमित्तत्वात्[4] अनित्याविवोपचर्येते धक्ष्यत्यग्निः प्रकाशयिष्यति सविता इति। तद्वत्। एवं च सुखदुःख-बन्धमोक्षाद्यध्यारोपो लोकस्य। तदपेक्ष्य 'तत्त्वमसि' (छा. ६-८-७), 'आत्मानमेवावेत्' (बृ. १-४-१०) इत्यात्मावबोधोपदेशिन्यः श्रुतयः केवलमध्यारोपापोहार्थाः[5]। यथा 'सवितासौ प्रकाशयत्यात्मानम्'[6] इति तद्वत्। बोधकर्तृत्वं च नित्यबोधात्मनि[7]। तस्मात्[8] अन्यदविदितात्॥

---

1. एवमादीनि वचनानीत्यध्याहार्यम्॥

2. आत्मबोधार्थं बोधोपदेशः॥

3. अपोहार्थत्वे चेत्यर्थः। 'बोधादन्यस्याबोधात्मकत्वेन अबोधाश्रयत्वं न समञ्जसम्। आत्माश्रयत्वप्रसङ्गात्। अनिवृत्तिप्रसङ्गाच्च तस्य बोधासंभवात्। तस्माद्बोधात्मन एवाबोधः समञ्जसः। परिशेषात्। विरोधश्च असिद्धः। साक्षि-वेद्यत्वात्। बोधोऽपि तत्रैव समञ्जसः घटादेर्लोके बोद्धृत्वाप्रसिद्धेः' इति तु टीका॥

4. सकारयुक्तः पाठो वा॥ 'निमित्तत्वात्' इति आ॥ अनात्मनि बोधविषयत्वतदभावयोरनित्यत्वात्, विषयप्रकाशाप्रकाशापेक्षया आत्मनि बोधा-बोधौ अनित्याविवोपचर्येते। यथा नित्यौष्ण्योऽप्यग्निः विषयापेक्षया धक्ष्यतीत्य-नित्यवदुपचर्यत इत्यर्थः॥

5. अबोधबन्धमोक्षाद्यध्यारोपमपोह्य नित्यबुद्धमुक्तस्वरूपतोपदेशनार्थाः॥

6. अन्यप्रकाशानपेक्ष इत्यर्थे प्रयोगः॥

7. बोधविषयत्वमिव कर्तृत्वं चेति चकारार्थः। न हि बोधक्रियाकर्तृत्व-मेवास्मिन् वर्तते वस्तुत इति भावः॥ 8. मुख्यबोधाविषयत्वात्॥

अधिशब्दश्चान्यार्थे[1] । यद्वा यद्धि यस्याधि तत्ततोऽन्यत् । सामर्थ्यात् । यथा अधि भृत्यादीनां राजा । अव्यक्तमेवाविदितम्, ततोऽन्यत् इत्यर्थः ॥

## हेयोपादेयरहितं ब्रह्म

१६. विदितम्, अविदितं च व्यक्ताव्यक्ते कार्यकारणत्वेन विकल्पिते । ताभ्याम् अन्यद् ब्रह्म विज्ञानस्वरूपं सर्वविशेषप्रत्यस्तमितम् इत्ययं समुदायार्थः । अत एव, आत्मत्वान्न हेय उपादेयो वा । अन्यद्धि अन्येन हेयम्, उपादेयं वा । न तेनैव तद् यस्य कस्यचिद्[2] हेयम् उपादेयं वा भवति । आत्मा च ब्रह्म सर्वान्तरत्वादविषयः[3] । अतोऽन्यस्यापि न हेयमुपादेयं वा । अन्याभावाच्च[4] ॥

१७. 'इति शुश्रुम पूर्वेषाम्' इत्यागमोपदेशः । व्याचचक्षिरे इत्यस्वातन्त्र्यं तर्कप्रतिषेधार्थम्[5] । ये नः तद्ब्रह्म उक्तवन्तः, ते नित्यमेव[6] आगमं ब्रह्मप्रतिपादकं व्याख्यातवन्तः । न पुनः स्वबुद्धिप्रभवेण तर्केणोक्तवन्तः इत्यागम[7]पारम्पर्याविच्छेदं दर्शयति विद्यास्तुतये[8] । तर्कस्तु अनवस्थितो भ्रान्तोऽपि भवतीति ॥ ४ ॥

---

1. अत्र 'वा' इत्यपेक्षितमिति भाति ॥
2. 'यस्य कस्यचित्' इति नापेक्षितम् । 'अतोऽन्यस्यापि' इत्यस्यानन्तरम् उत्तरवाक्ये वा स्थापनीयमिति भाति ॥
3. 'सर्वान्तरत्वादविषयम्' वा ॥
4. सति ह्यन्यस्मात् तस्य हेयमुपादेयं वा स्यात् ॥
5. प्रत्यक्षादिसर्वप्रमाणविषयप्रतिषेधे वक्तव्ये तर्कप्रतिषेधार्थमिति संकोचकारणं न पश्यामः ॥
6. 'ते तमेव' वा ॥
7. 'इति तस्यैव द्रढिम्ने आगम' वा ॥
8. आत्मवस्तु सदैवाऽऽगमेनैव प्रतिपाद्यमिति स्थिते विद्यास्तुतये इति किमर्थमिति न विज्ञायते ॥



# आगमार्थदृढीकरणम्, ब्रह्मण उपास्यरूपत्वानियतत्वं च

यद्वाचाऽनभ्युदितं ........ नेदं यदिदमुपासते ॥ ५ ॥

## वागविषयं वाक्प्रकाशकं च ब्रह्म

१८. 'यद्वाचा' इति मन्त्रानुवादो[1] दृढप्रतीत्यै । 'अन्यदेव तद्विदितात्' इति योऽयमागमार्थो ब्राह्मणोक्तः अस्यैव द्रढिम्ने इमे मन्त्राः 'यद्वाचा' इत्यादयः पठ्यन्ते । यद् ब्रह्म वाचा शब्देन अनभ्युदितम् अनभ्युक्तम् । अप्रकाशितमित्येतत् । 'येन वागभ्युद्यते' इति वाक्प्रकाशहेतुत्वोक्तिः । येन प्रकाश्यते इति वाचोऽभिधानस्य अभिधेयप्रकाशकत्वस्य हेतुत्वम्[2] उच्यते ब्रह्मणः । उक्तं च 'केनेषितां वाचमिमां वदन्ति' (१-१), 'यद्वाचो ह वाचम्' (१-२) इति[3] ॥

## ब्रह्म सर्वस्याऽऽत्मा, उपास्यत्वरूपानियतं च

१९. 'तदेव ब्रह्म त्वं विद्धि' इत्यविषयत्वेन ब्रह्मण आत्मन्यवस्थापनार्थं[4] आम्नायः । यद्वाचा अनभ्युदितं वाक्प्रकाशनिमित्तं चेति ब्रह्मणोऽविषयत्वेन वस्त्वन्तरजिघृक्षां[5] निवर्त्य स्वात्मन्येवावस्थापयत्याम्नायः 'तदेव ब्रह्म त्वं विद्धि' इति । यत्नत उपरमयति 'नेदम्' इति[6] । उपास्यप्रतिषेधाच्च[7] ॥ ५ ॥

---

1. मन्त्रैः क्रियमाणानुवादः । वागाद्यविषयत्वतत्प्रकाशकत्वयोरनुवाद इत्यर्थः ॥
2. अभिधेयप्रकाशनसामर्थ्यनिमित्तत्वम् ॥
3. केनेषितामिति वाचः सामर्थ्याधानहेतुत्वोक्तिः, वाचो ह वाचमिति च तद्विषयत्वासंभवकथनं चेति भावः स्यात् ॥
4. आत्मत्वेनैव प्रतिपादनार्थः ॥
5. आत्मनः सकाशात् वस्त्वन्तरत्वेन जिघृक्षाम् ॥
6. वस्त्वन्तरत्वेन ग्रहणात् इति शेषः ॥
7. उपास्यं न ब्रह्मेति वचनेन च वस्त्वन्तरग्रहणप्रतिषेधः ॥

यन्मनसा ........ यदिदमुपासते ॥ ६ ॥

यच्चक्षुषा ........ यदिदमुपासते ॥ ७ ॥

यच्छ्रोत्रेण ........ यदिदमुपासते ॥ ८ ॥

यत्प्राणेन ........ यदिदमुपासते ॥ ९ ॥

२०. 'यन्मनसा' इत्यादि समानम्। 'मनो मतम्' इति। येन ब्रह्मणा मनोऽपि विषयीकृतम् नित्यविज्ञानस्वरूपेण इत्येतत्। सर्वकरणानामविषयः, तानि च सव्यापाराणि सविषयाणि नित्यविज्ञानस्वरूपावभासतया येनावभास्यन्ते इति श्लोकार्थः[1]। 'क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति[2]' (गी. १३-३३) इति स्मृतेः। 'तस्य भासा' (मुं २-२-१०) इति चाथर्वणे। 'येन प्राणः' इति क्रियाशक्तिरप्यात्मविज्ञाननिमित्ता इत्येतत् ॥ ६-९ ॥

---

1. 'श्लोकानामर्थः'। तदेव ब्रह्म त्वं विद्धि- इति तु वाक्यं पूरणीयं सर्वत्रेत्यभिप्रायः ॥ 2. 'भारत' इत्यधिकं वा ॥



# अथ द्वितीयः खण्डः

## गुरोः शिष्यबुद्धिविचालना

यदि मन्यसे ........ विदितम् ॥ १ ॥

### ब्रह्म विषयीकृत्य वेदाहमिति न मन्तव्यम्

२१. 'यदि मन्यसे सुवेदेति' (इति) शिष्यबुद्धिविचालना गृहीतस्थिरतायै। विदिताविदिताभ्यां निवर्त्य बुद्धिं शिष्यस्य स्वात्मन्यवस्थाप्य 'तदेव ब्रह्म त्वं विद्धि' इति स्वाराज्ये अभिषिच्य उपास्यप्रतिषेधेन, अथास्य बुद्धिं विचालयति- यदि मन्यसे 'सुवेदाहं ब्रह्म' इति त्वं[1] ततोऽल्पमेव ब्रह्मणो रूपं वेत्थ त्वमिति नूनं निश्चितं मन्यते - इति[2] आचार्यः। सा पुनर्विचालना किमर्थेति ? उच्यते। पूर्वगृहीते वस्तुनि बुद्धेः स्थिरतायै। देवेष्वपि[3] सुवेदाहम् इति मन्यते यः, सोऽप्यस्य ब्रह्मणो रूपं दहरमेव[4] वेत्ति नूनम्। कस्मात् ? अविषयत्वात्। कस्यचिद् ब्रह्मणः। अथवा अल्पमेवास्य आध्यात्मिकं मनुष्येषु, देवेषु च आधिदैविकम् अस्य ब्रह्मणो यद्रूपम्, तत् इति संबन्धः ॥

### वेद्यं ब्रह्मेति विदुषो ब्रह्म मीमांस्यमेव

२२. 'अथ नु' इति हेतुर्मीमांसायाः। यस्माद् दहरमेव[4] सुविदितं ब्रह्मणो रूपम्। 'अन्यदेव तद्विदितात्' इत्युक्तत्वात्। 'सुवेद' इति च मन्यसे। अतोऽल्पमेव वेत्थ त्वं ब्रह्मणो रूपं यस्मात्, अथ नु तस्मात् मीमांस्यमेव अद्यापि ते तव ब्रह्म, विचार्यमेव यावद् विदिताविदितप्रतिषेधागमार्थानुभव इत्यर्थः ॥

---

1. सुष्ठु वेदाहं ब्रह्मतत्त्वमिति ॥
2. इतिशब्दो नास्ति वा ॥ अपेक्षितं तु ॥ 3. देवानामपि मध्ये ॥
4. 'दभ्रम्' इति पदभाष्यपाठः। वा ॥ पाठोऽपि तथा ॥

## शिष्यस्य मन्येऽहं ब्रह्मेति प्रतिज्ञा

२३. 'मन्ये विदितम्'[1] इति शिष्यस्य मीमांसानन्तरोक्तिः प्रत्ययत्रयसंगतेः। सम्यग्वस्तुनिश्चयाय विचालितः शिष्यः आचार्येण 'मीमांस्यमेव ते' इति चोक्तः एकान्ते समाहितो भूत्वा यथोक्तं सुपरिनिश्चितः सन् आह आगमाचार्यात्मानुभवप्रत्ययत्रयस्य एकविषयत्वेन संगत्यर्थम्। एवं हि सुपरिनिष्ठिता (निश्चिता ?) विद्या सफला स्यात्, नानिश्चिता इति न्यायः प्रदर्शितो भवति 'मन्ये विदितम्' इति। परिनिष्ठितनिश्चितविज्ञानप्रतिज्ञाहेतूक्तेः। परिनिष्ठितं सफलं विज्ञानं प्रतिजानीते आचार्यात्मनिश्चययोस्तुल्यतायै। यस्माद् हेतुमाह– 'नाह मन्ये सु वेदेति' इति ॥ १ ॥

## शिष्यस्य प्रतिवचनम्

**नाह मन्ये ............... नो न वेदेति वेद च ॥ २ ॥**

## अहं यथावद् ब्रह्म वेदेति शिष्योक्तिः

२४. 'अह[2]' इत्यवधारणार्थो निपातः। नैव मन्ये इत्येतत्। यावदपरिनिष्ठितं विज्ञानम्, तावत् सुवेद सुष्ठु वेदाहं ब्रह्म इति विपरीतो मम निश्चय आसीत्। सोऽपजगाम भवद्भिर्विचालितस्य यथोक्तार्थमीमांसाफलभूतात् स्वात्मब्रह्मत्वनिश्चयरूपात् सम्यक्प्रत्ययात्। विरुद्धत्वात्। अतो नाह मन्ये सुवेदेति। यस्माच्च तत् न वेदेति नो[3] 'मन्ये' इत्यनुवर्तते। अविदितब्रह्मप्रतिषेधात्॥

कथं तर्हि मन्यसे?– इत्युक्त आह– वेद च। चशब्दात् वेद च न वेद च इत्यभिप्रायः। विदिताविदिनाभ्याम् अन्यत्वाद् ब्रह्मणः।

1. 'मन्ये विदितम्' इतीदमाचार्यवचनभागत्वेनैव नीतं पदभाष्ये ॥ प. भा. भा. खं. ३७.
2. पदभाष्यानुसारेण 'नाहम्' इति पाठः, इह तु 'नाह' इति ॥
3. 'यस्माच्च' एतत् नैव न वेद नो न वेदेति वा ॥; 'यस्माच्च तन्नैव न वेदेति' आ॥ एतद्द्वयं मूलानुसारेण परिवर्त्य लिखितमस्माभिः ॥



तस्मात्, मया विदितं ब्रह्म इति मन्ये इति वाक्यार्थः। अथवा 'वेद च' इति नित्यविज्ञानब्रह्मस्वरूपतया नो न वेद। वेदैव चाहम्। स्वरूपविक्रियाभावात्। विशेषविज्ञानं च पराध्यस्तं न स्वतः इति परमार्थतो न च वेदेति ॥

## उपास्यब्रह्मवेदनपक्षनिरासः

२५. 'यो नस्तद्वेद तद्वेद' इति पक्षान्तरनिरासार्थमाम्नायः। उक्तार्थानुवादात्। यो नः अस्माकं मध्ये तद्वेद[1] स एव तद् ब्रह्म वेद नान्यः। उपास्यब्रह्मवित्त्वात्, अतोऽन्यस्य[2]। यथा अहं वेद चेति[3] पक्षान्तरे ब्रह्मवित्त्वं निरस्यते। कुतोऽयमर्थोऽवसीयत इति? उच्यते। उक्तानुवादात्। उक्तं ह्यनुवदति 'नो न वेदेति वेद च' इति[4] ॥ २ ॥

## श्रुत्युपदेशोपसंहारः

**यस्यामतं ................ विज्ञातमविजानताम् ॥ ३ ॥**

## अतीतग्रन्थार्थस्योपसंहारः

२६. 'यस्यामतम्' इति श्रौतम्[5] आख्यायिकार्थोपसंहारार्थम्। शिष्याचार्योक्तिप्रत्युक्तिलक्षणया अनुभवयुक्तिप्रधानया[6] आख्यायिकया

1. इदं पदं त्रुटितम् आ. ॥
2. अतोऽन्यस्य मत्तोऽन्यस्य यथाहं वेद तथा अविदुषः इत्यर्थः ॥
3. 'यथाऽहं वेदेति वेद चेति' इति आ ॥ पाठस्तु 'यथाहं नो न वेदेति वेद चेति' इत्येतल्लेखकप्रमादादन्यथा लिखित इति कल्पनीयम्। 'यथाहं वेदेति पक्षान्तरे' इति वा ॥ पाठे चकारोऽपेक्षितः, 'न वेद च' इति पक्षसमुच्चयार्थम् ॥
4. 'नो न वेदेति वेद च' इति यो नस्तद्वेद स एव तद्वेदेत्यर्थोऽनुवादेनावसीयते। अत उपास्यब्रह्मवित्पक्ष एवात्र निरस्यत इत्यवगम्यत इति भावः ॥
5. 'वचनम्' इति शेषः ॥
6. 'अन्यदेव तद्विदितात्' इति यद्यप्यागम एव, तथापि शिष्याचार्योक्तिप्रत्युक्तिलक्षणयाख्यायिकया उक्तत्वात् तस्य युक्त्यनुभवप्रधानत्वमेव नागमप्रधानत्वमित्यभिप्रायः स्यात् ॥

योऽर्थः सिद्धः स श्रौतेन वचनेन आगमप्रधानेन[1] निगमनस्थानीयेन संक्षेपत उच्यते ॥

## विदिताद्न्यदित्येव ज्ञेयं ब्रह्म, न विदितमिति

२७. यदुक्तं विदितादन्यद्[2] वागादीनामगोचरत्वात् मीमांसितं च अनुभवोपपत्तिभ्यां ब्रह्म, तत् तथैव ज्ञातव्यम्। कस्मात्? यस्यामतम्। यस्य विविदिषाप्रयुक्तप्रवृत्तस्य साधकस्य अमतम् अविज्ञातम्। अविदितं ब्रह्म इति आत्मतत्त्वनिश्चयफलावसानावबोधतया विविदिषा निवृत्ता इत्यभिप्रायः। तस्य मतं ज्ञातम्। तेन विदितं ब्रह्म येन अविषयत्वेन आत्मत्वेन प्रतिबुद्धम् इत्यर्थः। स सम्यग्दर्शी यस्य विज्ञानानन्तरमेव ब्रह्मात्मभावस्यावसितत्वात् सर्वतः कार्याभावः[3] ॥

विपर्ययेण[4] मिथ्याज्ञानो भवति। कथम्? मतं विदितम्, ज्ञातं मया ब्रह्म इति यस्य विज्ञानम्, स मिथ्यादर्शी विपरीतविज्ञानो, विदितादन्यत्वाद् ब्रह्मणः। न वेद सः। न विजानाति ॥

## प्रासङ्गिकी अवैदिकमतनिराकृतिः

२८. ततश्च सिद्धम् अवैदिकस्य[5] विज्ञानस्य मिथ्यात्वम्। अब्रह्मविषयतया निन्दितत्वात्[6]। तथा कपिलकणभुगादिसमयस्यापि

1. उपदेशप्रधानेनेत्यर्थः। न ह्यत्र यद्वाचानभ्युदितम् इत्यादियुक्तिः प्रदर्श्यते इति भावः। यत्रागमो ब्रह्मवस्तुनः, तत्रानुभव एवाश्रीयत इति 'आख्यायिका युक्त्यनुभवप्रधाना' इत्युक्तेः स्वारस्यं न पश्यामः ॥

2. 'विदिताविदिताभ्यामन्यद्' वा॥

3. 'कार्यभावः' इति (वा॥) पाठोऽयुक्तः। ब्रह्मात्मभावाध्यवसानात् परेण कार्यं नावशिष्यत इति हि विवक्षितम् ॥

4. 'अमतम्' इत्यस्य विपर्ययेण मतम् इति ज्ञानेनेत्यर्थः ॥

5. यथोक्तागमोपदिष्टेतरस्येत्यर्थः ॥

6. 'नेदं ब्रह्म', 'न वेद सः' इति च निन्दितत्वादित्यर्थः ॥



विदितब्रह्मविषयत्वात्[1]। अनवस्थिततर्कजन्यत्वात्, विविदिषानिवृत्तेश्च[2] मिथ्यात्वमिति। स्मृतेश्च— 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रोक्ता[3](?)स्तमोनिष्ठा हि ताः स्मृताः' ॥ (मनु. १२-९५) इति ॥

## पूर्वोक्तार्थे हेतुः

२९. 'अविज्ञातं विजानतां विज्ञातमविजानताम्' इति पूर्वहेतूक्तिः। अनुवादस्यानर्थक्यात्। अनुवादमात्रे अनर्थकं वचनमिति विपर्ययमिथ्याज्ञानयो[4](?)र्नष्टत्वादिति पूर्वोक्तयोः 'यस्यामतम्' इत्यादिना ज्ञानाज्ञानयोर्हेत्वर्थत्वेन इदमुच्यते। अविज्ञातम् अविदितम् आत्मत्वेनाविषयतया ब्रह्म विजानतां यस्मात् तस्मात् तदेव ज्ञानम्। यत् तेषां[5] (?) विज्ञातं विदितं व्यक्तमेव बुद्ध्यादिविषयं ब्रह्म अविजानताम्— विदिताविदितव्यावृत्तात्मभूतं नित्यविज्ञानस्वरूपम्। आत्मस्थं अविक्रियममृतमजरमभयम् अनन्यत्वादविषयम् इत्येवम् अविजानताम्— बुद्ध्यादिविषयात्मतयैव नित्यं विज्ञातं ब्रह्म। तस्माद् विदिताविदितव्यक्ताव्यक्तधर्माध्यारोपेण कार्यकारणभावेन सविकल्पम्, अयथार्थविषयत्वात्, शुक्तिकादौ रजताद्यध्यारोपणज्ञानवन्मिथ्याज्ञानं तेषाम्[6] ॥ ३ ॥

1. यद्यपि कपिलसमये नास्त्येवेश्वरः। तथापि तेषां विदितप्रधानस्यैव परमार्थत्वमिति, तेषामपि समयो विदितब्रह्मविषयः ॥

2. अनुभवपर्यवसानाभावादित्यर्थः ॥

3. 'प्रेत्य' इति मुद्रितमनुस्मृतिपुस्तकपाठः ॥

4. इदं वा.॥ पाठानुसारेण; तत्र इतिशब्दस्तु नास्ति। आ॥ पाठे तु 'अविज्ञातं' इत्यतः प्राक् प्रमादतः क्षिप्तम् 'विपरीतमिथ्याज्ञानयोर्नष्टत्वात्' इति। यथाश्रुते विजानतां विपर्ययस्य मिथ्याभूतस्याज्ञानस्य नष्टत्वात् इति कथञ्चिद् व्याख्येयम्। 'विपर्ययाज्ञानयोः' इति यदि पाठोऽस्ति तदा न क्लेशः ॥

5. 'यत्त्वन्येषां' इत्यस्य स्थाने प्रमादेन लिखितमिदं स्यात्। अस्य परित्यागेऽपि न काचित् क्षतिः ॥

6. यथावद् ब्रह्माविजानताम् नित्यं विज्ञातं ब्रह्म। तस्मात्तेषां ज्ञानं मिथ्येत्यर्थः ॥

## प्रत्ययानामात्मावबोधद्वारत्वम्

प्रतिबोधविदितं ............ विन्दतेऽमृतम् ॥ ४ ॥

### प्रत्ययसामान्यस्य आत्मावबोधद्वारत्वम्

३०. 'प्रतिबोधविदितम्'[1], इति वीप्सा प्रत्ययानाम् आत्मावबोधद्वारत्वात् । 'बोधं प्रति बोधं प्रति' इति वीप्सा सर्वप्रत्ययव्याप्त्यर्था । बौद्धा हि सर्वे प्रत्ययाः, तप्तलोहवन्नित्यविज्ञानस्वरूपात्मव्याप्तत्वाद् विज्ञानस्वरूपावभासाः । तदन्यावभासश्चाऽऽत्मा तद्विलक्षणोऽग्निवदुपलभ्यते इति तेन ते द्वारीभवन्ति आत्मोपलब्धौ । तस्मात् प्रतिबोधावभासप्रत्यगात्मतया यद् विदितं ब्रह्म[2] तदेव मतम्[3] । तदेव सम्यग्ज्ञानं यत्[4] प्रत्यगात्मविज्ञानम्, न विषयविज्ञानम् । आत्मत्वेन[5] 'प्रत्यगात्मानमैक्षत्' (क. २–१–१) इति च **काठके** ॥

### अमृतत्वप्राप्तिवचनं मर्त्यत्वभ्रमनिरासापेक्षया

३१. 'अमृतत्वं हि विन्दते' इति हेतुवचनं विपर्यये मृत्युप्राप्तेः। विषयात्मविज्ञाने हि मृत्युः प्रारभते[6] (?) इति आत्मविज्ञानम् अमृतत्वनिमित्तमिति युक्तं हेतुवचनम् । 'अमृतत्वं हि विन्दते' इति । आत्मज्ञानेन किममृतत्वमुत्पाद्यते ? न । कथं तर्हि ? आत्मना विन्दते स्वेनैव नित्यात्मस्वभावेन[7] अमृतत्वं विन्दते, नालम्बनपूर्वकम्[8] । 'विन्दते'

---

1. 'मतमिति' इत्यधिकम् आ ॥ 2. 'तद्ब्रह्म' इति मुद्रितपुस्तकेषु ॥
3. 'ज्ञातम्' इत्यधिकम् आ ॥
4. 'सम्यग्ज्ञानवत्' इति (आ ॥) पाठस्तु मुद्रणदोषः स्यात् ॥
5. 'ब्रह्मण आत्मत्वेन विषयत्वासंभवात्' इति टीका । इदं पदं च्युक्तं शक्यमिति भाति । 'न विषयविज्ञानमात्मत्वेन' इति योजयित्वा विषयमात्मत्वेन विज्ञातुं न युक्तमिति वाक्यार्थमवयन्ति तु केचित् ॥
6. 'प्राप्यते' इत्यस्य स्थाने लिखितमिदं स्यात् । 'प्रारभते भयम्' इति तु टीका ॥
7. नित्यस्वभावाभिन्नमेवामृतत्वं विन्दते इत्यर्थः ॥
8. उपास्यालम्बनपूर्वकमित्यर्थः स्यात् ॥



इत्यात्मज्ञानापेक्षम्[1] । यदि हि विद्योत्पाद्यममृतत्वं स्यात्, अनित्यं भवेत्, कर्मकार्यवत् । अतो न विद्योत्पाद्यम् ॥

### विद्यया असाधारणं वीर्यं प्राप्यते

३२. यदि चाऽऽत्मनैव अमृतत्वं विन्दते[2], किं पुनर्विद्यया क्रियत इति ? उच्यते । अनात्मविज्ञानं निवर्तयन्ती सा तन्निवृत्त्या स्वाभाविकस्य अमृतत्वस्य निमित्तमिति कल्प्यते । यत आह 'वीर्यं विद्यया विन्दते' । वीर्यं सामर्थ्यम्, अनात्माध्यारोपमायास्वान्तध्वान्तानभिभाव्यलक्षणं बलं विद्यया विन्दते[3] । तच्च किंविशिष्टम् ? अमृतम् अविनाशि । अविद्याजं हि वीर्यं विनाशि । विद्यया अविद्याया बाध्यत्वात्, न तु विद्याया बाधकोऽस्तीति विद्याजं अमृतं वीर्यम्[4] । अतो विद्या अमृतत्वे निमित्तमात्रं भवति । 'नायमात्मा बलहीनेन लभ्यः' (मु. ३–२–४) इति च **आथर्वणे** । लोकेऽपि विद्याजमेव बलम् अभिभवति, न शरीरादिसामर्थ्यं यथा हस्त्यादेः[5] ॥

### प्रतिबोधविदितम् इत्यादिवाक्यस्य व्याख्यानान्तरम्

३३. अथवा 'प्रतिबोधविदितं मतम्' इति सकृदेवाशेषविप-

---

1. मर्त्यत्वभ्रमनिवृत्त्यर्थं ज्ञानापेक्षा न तु अमृतत्वोत्पादनार्थम् ॥
2. 'अमृतत्वं हि विन्दते, आत्मना विन्दते' इति संबन्ध इति भावः ॥
3. एतदेवं व्याख्यातं टीकायाम्- 'स्वस्य अन्तः, अवच्छेदो भवति येन ध्वान्तेन, तत् स्वान्तध्वान्तम् । अनात्माध्यारोपो मनुष्यत्वाद्यभिमानः पारमेश्वरी शक्तिर्माया, जीवत्वनिमित्तमज्ञानं स्वान्तध्वान्तम् । एतैः सर्वैरभिभवनीयो न भवत्यात्मा येन विद्याकृतेनातिशयेन तद्वीर्यं विद्वान् लभते । पूर्वसिद्धस्याज्ञानादेर्नाशात्, मायायाश्च स्वतो जीवबन्धकत्वाभावात्, अभिनवस्याज्ञानस्योत्पत्तौ कारणाभावात् । प्रवृत्तफलकर्माक्षिप्तस्य चाज्ञानलेशस्य द्वैतावभासस्य च विद्वदनभिभावकत्वाद् दुर्बलत्वान्निश्चीयते सम्यग्ज्ञानस्यामृतत्वहेतुत्वमित्यर्थः ।' तदेतत्सर्वं प्रस्थानत्रयभाष्येषु न दृष्टचरमिति स्पष्टमेव ॥
4. 'विद्यया अमृतं वीर्यं विन्दते' इति संबन्ध इति भावः । अत्र पाठक्रमानुसारेणैवान्वयः कृतो दृश्यते पदभाष्ये ॥
5. बुद्धिबलादेव हि हस्त्यादयः पुरुषैर्वशीक्रियन्ते ॥

रीतनिरस्तसंस्कारेण स्वप्नप्रतिबोधवद्[1] विदितं तदेव मतं ज्ञातं भवतीति।
अथवा गुरूपदेशः प्रतिबोधः। तेन वा विदितं मतमिति। उभयत्र प्रतिबोधशब्दप्रयोगोऽस्ति। 'सुप्तप्रतिबुद्धः', 'गुरुणा प्रतिबोधितः' इति। पूर्वं तु यथार्थम् ॥ ४ ॥

## आत्मा इहैव वेदितव्यः

इह चेदवेदीदथ ............ भवन्ति ॥ ५ ॥

## आत्मा अस्मिन्नेव जन्मन्यवश्यं ज्ञातव्यः

३४. 'इह चेदवेदीत्' इत्यवश्यकर्तव्यतोक्तिः। विपर्यये विनाशश्रुतेः। इह मनुष्यजन्मनि सति, अवश्यमात्मा वेदितव्यः इत्येतद् विधीयते। कथम्? इह चेदवेदीत् विदितवान्, अथ सत्यं परमार्थतत्त्वम् अस्ति, अवाप्तम्। तस्य जन्म सफलम् इत्यभिप्रायः। न चेदिहावेदीत् न विदितवान्, वृथैव जन्म। अपि च महती विनष्टिः, महाविनाशो जन्ममरणप्रबन्धाविच्छेदप्राप्तिलक्षणा स्याद् यतः, तस्मात् अवश्यं तद्विच्छेदाय ज्ञेय आत्मा ॥

३५. ज्ञानेन तु किं स्यादिति? उच्यते। भूतेषु भूतेषु चराचरेषु सर्वेष्वित्यर्थः। विचित्य[2] पृथङ्निष्कृष्य। एकम् आत्मतत्त्वं संसारधर्मैरस्पृष्टम् आत्मभावेनोपलभ्येत्यर्थः। अनेकार्थत्वाद्धातूनाम्। न पुनः 'चित्वा' इति संभवति। विरोधात्। धीराः धीमन्तः, विवेकिनः, विनिवृत्तबाह्यविषयाभिलाषाः। प्रेत्य मृत्वा[3](?) अस्माल्लोकात्, शरीराद्यनात्मलक्षणाद् व्यावृत्तममत्वाहङ्काराः सन्त इत्यर्थः। अमृता अमरणधर्माणो नित्यविज्ञानामृतत्वस्वभावा एव भवन्ति ॥ ५ ॥

---

1. 'अशेषतया विपरीतो निरस्तः संस्कारो येन बाधेन (बोधेन?) स प्रतिबोधः। युगपत्कृत्स्नाविद्यातत्कार्यनिवर्तकः सद्योमुक्तिहेतुरित्यर्थः।' इति टीका। 'निरस्ताशेषविपरीतसंस्कारेण' इति त्वपेक्षितः पाठः, तदुपरि 'बोधेन' इति चापेक्ष्यते। अयं तु वादः पदभाष्ये निरस्तः ॥

2. 'विचार्य' इत्यधिकं वा ॥ 3. इदमधिकमत्र पदमिति भाति ॥



# अथ तृतीयः खण्डः

## आख्यायिकासंबन्धः

३६. 'ब्रह्म ह देवेभ्यः' इति ब्रह्मणो दुर्विज्ञेयतोक्तिर्यत्नाधिक्यार्था। समाप्ता ब्रह्मविद्या यदधीनः पुरुषार्थः। अत ऊर्ध्वम् अर्थवादेन ब्रह्मणो दुर्विज्ञेयता उच्यते। तद्विज्ञाने कथं नु नाम यत्नमधिकं कुर्यादिति ॥

शमाद्यर्थो वाऽऽम्नायः। अभिमानशातनात्। शमादि वा ब्रह्मविद्यासाधनं विधित्सितम्, तदर्थोऽयमर्थवादाम्नायः। न हि शमादिसाधनरहितस्य, अभिमानरागद्वेषादियुक्तस्य ब्रह्मविज्ञाने सामर्थ्यमस्ति। व्यावृत्तबाह्यमिथ्याप्रत्ययग्राह्यत्वाद् ब्रह्मणः। यस्माच्च अग्न्यादीनां जयाभिमानं शातयति, ततश्च ब्रह्मविज्ञानं दर्शयत्यभिमानोपशमे। तस्मात्, **शमादिसाधनविधानार्थोऽयमर्थवाद** इत्यवसीयते ॥

**सगुणोपासनार्थो** वा[1]। अपोदितत्वात्। 'नेदं यदिदमुपासते' (२-५,६,७,८,९) इत्युपास्यत्वं ब्रह्मणोऽपोदितम्[2]। अपोदितत्वादनुपास्यत्वे प्राप्ते तस्यैव ब्रह्मण सगुणत्वेन, अधिदैवमध्यात्मं च उपासनं विधातव्यम् इत्येवमर्थो वा। 'इत्यधिदैवतम्'(४-४), 'तद्वनमित्युपासितव्यम्' (४-६) इति हि वक्ष्यति ॥

## देवतानां गर्वप्राप्तिः

ब्रह्म ह ............ अमहीयन्त ॥ १ ॥

---

1. अत्र कृष्णतराक्षरैरङ्कितानि पदान्याख्यायिकार्थोपवर्णनसंग्राहकाणि। पदभाष्ये त्वन्यथैव वर्णित आख्यायिकार्थः ॥

2. अस्मिन् वाक्ये किं ब्रह्मण उपास्यत्वमपोदितम्, किं वा उपास्यरूपस्य ब्रह्मत्वमपोदितमित्यालोचनीयमेतत् ॥

## ईश्वरसिद्धिः

३७. 'ब्रह्म' इति परः[1]। लिङ्गात्। न ह्यन्यत्र परादीश्वरात् नित्यसर्वज्ञात् परिभूयाग्न्यादीन् तृणं वज्रीकर्तुं सामर्थ्यमस्ति। 'तन्न शशाक दग्धुम्' (३–६) इत्यादिलिङ्गात्, ब्रह्मशब्दवाच्य ईश्वर इत्यवसीयते। न ह्यन्यथा अग्निस्तृणं दग्धुं नोत्सहते, वायुर्वा आदातुम्। ईश्वरेच्छया तु तृणमपि वज्रीभवतीत्युपपद्यते ॥

तत्सिद्धिर्जगतो नियतप्रवृत्तेः। श्रुतिस्मृतिप्रसिद्धिभिर्नित्यसर्वविज्ञाने ईश्वरे सर्वात्मनि सर्वशक्तौ सिद्धेऽपि शास्त्रार्थनिश्चयार्थमुच्यते[2]। तस्येश्वरस्य सद्भावसिद्धिः कुतो भवतीति? उच्यते। यदिदं जगत् देवगन्धर्वयक्षरक्षःपितृपिशाचादिलक्षणं द्युवियत्पृथिव्यादित्यचन्द्रग्रहनक्षत्रविचित्रं विविधप्राण्युपभोगयोग्यस्थानसाधनसंबन्धि तदत्यन्त[3]कुशलशिल्पिभिरपि दुर्निर्माणम्, देशकालनिमित्तानुरूपनियतप्रवृत्तिनिवृत्तिक्रमम्, एतद्भोक्तृकर्मविभागज्ञप्रयत्न[4]पूर्वकं भवितुमर्हति। कार्यत्वे सति यथोक्तलक्षणत्वात्। गृहप्रासादरथशयनासनादिवत्। विपक्षे आत्मादिवत्[5]।

## जगद्वैचित्र्यं कर्मण एव न भवेत्

३८. कर्मण एवेति चेत्। न। परतन्त्रस्य निमित्तमात्रत्वात्। यदिदम् उपभोगवैचित्र्यं प्राणिनाम्, तत्साधनवैचित्र्यं च देशकाल-

1. आत्मेति शेषः ॥ 2. संभावनायुक्तिरिति शेषः ॥

3. तच्छब्दं किमर्थमिति चिन्त्यम्। उत्तरत्र एतच्छब्देनैव जगतः परामृष्टत्वात् ॥

4. अत्र प्रयत्नेति साध्यकोटौ निक्षिप्तमधिकमिति भाति। ईश्वरस्य प्रयत्नपूर्वकक्रियाकर्तृत्वेऽनीश्वरत्वप्रसङ्गादिति ॥

5. न हि आत्मादिः कार्यं यथोक्तवैचित्र्यवद्वा इति भावः। आदिशब्देन किं विवक्षितमिति न ज्ञायते। यत्तु 'आकाशादि' इति टीकावचनम्, तदनादेयम्। आकाशादेः पक्षान्तर्भावात् ॥



निमित्तानुरूपनियतप्रवृत्तिनिवृत्तिक्रमं च (?) तन्न नित्यसर्वज्ञकर्तृकम्। किं तर्हि कर्मण एव[1]। तस्याचिन्त्यप्रभावत्वात्। सर्वैश्च फलहेतुत्वाभ्युपगमात्[2]। सति कर्मणः फलहेतुत्वे किमीश्वराधिककल्पनया[3] इति न नित्यस्येश्वरस्य नित्यसर्वज्ञशक्तेः, फलहेतुत्वं चेति (?) चेत्। न कर्मण एवोपभोगवैचित्र्याद्युपपद्यते। कस्मात्? कर्तृतन्त्रत्वात् कर्मणः। चितिमत्प्रयत्ननिर्वृत्तं हि कर्म। तत्प्रयत्नोपरमादुपरतं सत्, देशान्तरे कालान्तरे वा नियतनिमित्तविशेषापेक्षं कर्तुः फलं जनयिष्यतीति न युक्तम् अनपेक्ष्यान्यदात्मनः प्रयोक्तृ ॥

(१) कर्तैव फलकाले प्रयोक्ता इति चेत् मया निर्वर्तितोऽसि, त्वां प्रयोक्ष्ये फलाय यदात्मानुरूपं फलम्[4] (?) इति। न। देशकालनिमित्तविशेषानभिज्ञत्वात्। यदि हि कर्ता देश[5]विशेषाभिज्ञः सन् स्वातन्त्र्येण कर्म नियुञ्ज्यात्, ततोऽनिष्टफलस्य अप्रयोक्ता स्यात्[6] ॥

(२) न च निर्निमित्तं तदनिच्छया आत्मसमवेतं तच्चर्मवद् विकरोति कर्म। न चाऽऽत्मकृतम् अकर्तृसमवेतं अयस्कान्तमणिवदाकृष्टं भवति (?)। प्रधानकर्तृसमवेतत्वात् कर्मणः[7] ॥

(३) भूताश्रयम्[8] इति चेत्। न। साधनत्वात्। कर्तृक्रियायाः साधनभूतानि भूतानि क्रियाकाले अनुभूतव्यापाराणि समाप्तौ च हलादिवत् कर्त्रा परित्यक्तानि न फलं कालान्तरे कर्तुम् उत्सहन्ते। न हि हलं क्षेत्राद्

1. भवतीति शेषः ॥

2. 'अभ्युपगमाच्च' इति वा ॥ पाठे चोऽधिकः ॥

3. कर्मण एव वैचित्र्ये सिद्धे ईश्वरकल्पने गौरवं स्यादित्यभिप्रायः ॥

4. 'तन्निर्वर्तये' इति शेषोऽभिप्रेतः स्यात् ॥

5. कालनिमित्तयोरपि ग्रहणमत्र युक्तम्। 'देशादि' इति वा ॥ पाठे तु ते गृहीते एव ॥

6. तस्मात् कर्तृविलक्षण ईश्वरोऽप्यपेक्ष्यत इति भावः ॥

7. दृष्टविपरीतकल्पनानुपपत्तिरिति भावः ॥

8. कर्मवैचित्र्यहेतुः स्यादिति शेषः ॥

व्रीहीन् गृहं प्रवेशयति। भूतकर्मणोश्चाचेतनत्वात् स्वतः प्रवृत्त्यनुपपत्तिः। वायुवदिति चेत्। न। असिद्धत्वात्। न हि वायोश्चितिमतः स्वतः प्रवृत्तिः सिद्धा। रथादिष्वदर्शनात्[1] ॥

## शास्त्रोक्तकर्मणः फलमीश्वरापेक्षम्

३९. शास्त्रात् कर्मण एवेति चेत्[2]। शास्त्रं हि क्रियातः फलसिद्धिमाह नेश्वरादेः 'स्वर्गकामो यजेत' इत्यादि। न च प्रमाणाधिगतत्वादानर्थक्यं युक्तम्[3]। न चेश्वरास्तित्वे प्रमाणान्तरमस्तीति चेत्[4]। न। दृष्टन्यायहानानुपपत्तेः। क्रिया हि द्विविधा दृष्टफला अदृष्टफला च। दृष्टफलापि द्विविधा, अनन्तरफला, कालान्तरफला च। अनन्तरफला गतिभुजिलक्षणा, कालान्तरफला कृषिसेवादिलक्षणा। तत्रानन्तरफला फलापवर्गिण्येव, कालान्तरफला तु उत्पन्नप्रध्वंसिनी। आत्मसेव्याद्यधीनं[5] हि कृषिसेवादेः फलं यतः। न चोभयन्यायातिरेकेण स्वतन्त्रं कर्म, ततो वा फलं दृष्टम्। तथा च कर्मफलप्राप्तौ न दृष्टन्यायहानम् उपपद्यते। तस्मात्[6] शान्ते यागादि कर्मणि नित्यः कर्तृकर्मफलविभागज्ञ ईश्वरः सेव्यादिवद् यागाद्यनुरूपफलदाता उपपद्यते स चाऽऽत्मभूतः सर्वस्य[7] सर्वक्रियाफलप्रत्ययसाक्षी नित्यविज्ञानस्वभावः संसारधर्मैरसंस्पृष्टः ॥

---

1. तस्माद्रथाद्याश्रितमिव चेतनाधिष्ठितमेव स्यादचेतनाश्रयं कर्मेति भावः॥
2. कर्ममीमांसकानां मतमिदम्। वे. सू. ३-२-४० ॥
3. यागादेः फलसाधनत्वावगमात्, तस्यैव अपूर्वरूपमवस्थान्तरं प्रकल्प्य फलहेतुत्वं कल्पनीयम्। अन्यथा वाक्यस्यानर्थक्यापत्तेरित्यभिप्रायः ॥
4. उपनिषद्वाक्यानामीश्वरबोधकानामर्थवादत्वेनापि प्रामाण्योपपत्तेरिति भावः ॥
5. वा ॥ पाठोऽयम् ॥
6. दृष्टन्यायानुसारेणैव कर्मफलस्य कल्पयितव्यत्वात् ॥
7. 'ननु जीवस्तावत्स्वोपभोगसाधननियन्ता, तस्यापीश्वरः फलदानेन नियन्ता चेदिष्यते तर्हि नियन्तुः स्वव्यतिरिक्तनियम्यत्वाङ्गीकारादीश्वरस्याप्यन्यो नियन्ता प्रसज्येत। नियन्तृत्वाविशेषात्। अतोऽनवस्थाप्रसङ्गबाधितमनुमानमित्याशङ्क्याऽऽह स चाऽऽत्मभूतः सर्वस्येति।' इति टीका। अत्र फलदातुरीश्वरस्य साक्षित्वेनानुमानं कथमिति तु नोक्तम् ॥



## श्रुतिप्रामाण्यादपीश्वरसिद्धिः

४०. श्रुतेश्च[1]। 'न लिप्यते लोकदुःखेन बाह्यः' (क. २-२-११), 'जरां मृत्युमत्येति' (बृ. ३-५-१), 'विजरो विमृत्युः' (छा. ८-७-१), 'सत्यकामः सत्यसंकल्पः' (छा. ८-७-१), 'एष सर्वेश्वरः' (बृ. ४-४-२२), 'पुण्यं (?)कर्म कारयति' (कौ. ३-९)[2], 'अनश्नन्नन्योऽभिचाकशीति' (मु. ३-१-१), 'एतस्य वा अक्षरस्य प्रशासने' (बृ. ३-८-९) इत्याद्या असंसारिण एकस्याऽऽत्मनो नित्यमुक्तस्य सिद्धौ श्रुतयः। स्मृतयश्च सहस्रशो विद्यन्ते। न चार्थवादाः शक्यन्ते कल्पयितुम्। अनन्ययोगित्वे सति विज्ञानोत्पादकत्वात्। न चोत्पन्नं विज्ञानं बाध्यते ॥

## श्रुत्या हीश्वरप्रतिषेधो नास्ति, आत्मत्वेनोपदेशस्तु

४१. अप्रतिषेधाच्च। न च 'ईश्वरो नास्ति' इति निषेधोऽस्ति। प्राप्त्यभावादिति चेत्। न। उक्तत्वात्। 'न हिंस्यात्' (?) इतिवत् प्राप्त्यभावात् प्रतिषेधो नारभ्यत इति चेत्[3]। न। ईश्वरसद्भावे न्यायस्योक्तत्वात् ॥

अथवा 'अप्रतिषेधात्' इति कर्मणः फलदाने ईश्वरकालादीनां न प्रतिषेधोऽस्ति। न च निमित्तान्तरनिरपेक्षं केवलेन कर्त्रैव प्रयुक्तं फलदं दृष्टम्[4]। न च विनष्टोऽपि यागः कालान्तरे फलदो भवति। सेव्य-

---

1. न केवलं विनाशिकर्मणोऽन्यथाफलोत्पत्त्यनुपपत्तेः- इति चकारार्थः ॥
2. 'साधु कर्म' इति तु कौषीतक्युपनिषदि पाठः ॥
3. न हिंस्यादिति सामान्यवाक्येन हिंसाप्रतिषेधस्य प्राप्तौ, विशेषाभ्यनुज्ञावाक्यं अग्नीषोमीयं पशुं संज्ञपयेदित्यारभ्यते। न त्विहास्तीश्वरप्राप्तिवचनम् येन तत्प्रतिषेधवचनमारभ्येतेति पूर्वपक्षिणो भावः ॥
4. तस्मादाकाङ्क्ष्यते तदन्यदपि सहायकमिति भावः ॥

बुद्धिवत् सेवकेन सर्वज्ञेश्वरबुद्धौ तु संस्कृतायां[1] यागादिकर्मणा विनष्टेऽपि कर्मणि सेव्यादिवेश्वरत्वात् फलं कर्तुर्भवतीति युक्तम्। न तु पुनः पदार्था वाक्यशतेनापि देशान्तरे कालान्तरे वा स्वं स्वं स्वभावं जहति। न हि देशकालान्तरेषु चाग्निरनुष्णो भवति[2]। एवं कर्मणोऽपि कालान्तरे फलं द्विप्रकारमेवोपलभ्यते। बीजक्षेत्रसंस्कारपरिरक्षा विज्ञानवत्कर्त्रपेक्षफलं कृष्यादि, विज्ञानवत्सेव्यबुद्धिसंस्कारापेक्षफलं च सेवादि। यागादेः कर्मणस्तथा विज्ञानवत्कर्त्रपेक्षफलत्वानुपपत्तौ कालान्तरफलत्वात् कर्मदेशकालनिमित्तविपाकविभागज्ञबुद्धिसंस्कारापेक्षं फलं भवितुमर्हति। सेवादिकर्मानुरूपफलज्ञसेव्यबुद्धिसंस्कारापेक्षफलस्येव। तस्मात् सिद्धः सर्वज्ञः, ईश्वरः सर्वजन्तुबुद्धिकर्मफलविभागसाक्षी 'सर्वभूतान्तरात्मा' (श्वे. ६–११), 'यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः' (बृ. ३–४–१) इति श्रुतेः[3]। स एव चात्राऽऽत्मा जन्तूनाम्। 'नान्योऽतोऽस्ति द्रष्टा.... श्रोता....मन्ता....विज्ञाता' (बृ. ३–७–२३), 'नान्यदतोऽस्ति विज्ञातृ' (बृ. ३–८–११) इत्याद्यात्मान्तरप्रतिषेधश्रुतेः। 'तत्त्वमसि' (छा. ६–८-७) इति चात्मत्वोपदेशात्। न हि मृत्पिण्डः काञ्चनात्मत्वेनोपदिश्यते[4]॥

## जीवानामीश्वरादनन्यत्वम्

४२. ज्ञानशक्तिकर्मोपास्योपासकशुद्धाशुद्धमुक्तामुक्तभेदादात्म-

1. ईश्वरस्य बुद्धिः तस्याः संस्कारश्च कथमिति चिन्त्यमिदम्। 'एतत्कर्मानेनानुष्ठितम् इति कर्मणा ईश्वरस्य बुद्धावरोह एव कर्मणा संस्कार' इति टीका। ईश्वरस्यापि बुद्धिरूपकरणापेक्षं ज्ञानमिति 'न तस्य कार्यं करणं च विद्यते' इति श्रुतिविरोधोऽस्मिन् कल्पे॥

2. तथा वैदिककर्मणामपि स्वभावहानं न युक्तम् इति भावः॥

3. उदाहृतश्रुतावात्मत्वादेवेश्वरसिद्धिर्भवतीति कथं कर्मस्वभावपरिरक्षणान्यथानुपपत्त्या ईश्वरसिद्ध्यर्थमुदाहृता सेति न विज्ञायते॥

4. एतदुपदेशान्यथानुपपत्त्या परमात्मैव श्रोतुः श्वेतकेतोरात्मेत्यवसीयत इति भावः॥



भेद एवेति चेत्। न। भेददृष्ट्यपवादात्। यदुक्तं संसारिण ईश्वरादनन्या इति। तत्र, किं तर्हि भेद एव संसार्यात्मनाम्। कस्मात्? लक्षणभेदात्, अश्वमहिषवत्। कथं लक्षणभेद इति? उच्यते। ईश्वरस्य तावन्नित्यं सर्वविषयं ज्ञानम्[1], सवितृप्रकाशवत्। तद्विपरीतं संसारिणाम् खद्योतस्येव। तथैव शक्तिभेदोऽपि। नित्या सर्वविषया चेश्वरशक्तिः, विपरीता इतरस्य[2]। कर्म च चित्स्वरूपात्मसत्तामात्रनिमित्तम् ईश्वरस्य, औष्ण्यस्वरूपद्रव्यसत्तामात्रनिमित्तदहनकर्मवत्। राजायस्कान्तप्रकाशकर्मवच्च[3] स्वात्माविक्रियारूपम्[4], विपरीतम् इतरस्य। 'उपासीत' इति वचनात्, उपास्य ईश्वरो गुरुराजवत्; उपासकश्चेतरः शिष्यभृत्यवत्। अपहतपाप्मादिश्रवणान्नित्यशुद्ध ईश्वरः; 'पुण्यो वै पुण्येन' (बृ. ३–२–१३) इति वचनाद्विपरीत[5] इतरः; अत एव नित्यमुक्त ईश्वरः; नित्यशुद्धियोगात् संसारीतरः। यत्र ज्ञानादि[6](?)लक्षणभेदोऽस्ति तत्र भेदो दृष्टः। यथा अश्वमहिषयोः। तथा ज्ञानादिलक्षणभेदात् ईश्वरात्मनां भेदोऽस्तीति चेत्॥

न। कस्मात्[7]? 'अन्योऽसावन्योऽहमस्मीति न स वेद' (बृ. १–४–१०), 'ते क्षय्यलोका भवन्ति' (छा. ७–२५–२), 'मृत्योः स मृत्युमाप्नोति' (क. २–१–१०) इति भेददृष्टिर्हि अपोद्यते। एकत्व-

1. इत आरभ्य ज्ञानशक्तीत्यादिसंग्रहवाक्यस्य विवरणं क्रियते॥

2. प्रक्रमानुसारेण 'इतरेषाम्' इत्यपेक्षितम्। एवमुत्तरत्रापि बहुवचनमपेक्षितमिति द्रष्टव्यम्॥

3. राजायस्कान्तप्रकाशानां कर्मवत्। अत्र राज्ञो धनधान्यादिदानरूपम्, प्रेरकत्वं चोपेक्ष्य 'स्वात्माविक्रियारूपम्' इत्युक्तम्॥

4. 'स्वात्मनोऽविक्रियारूपम्' वा॥

5. पुण्यपापलेपरूपाशुद्धिमान्॥

6. अत्र 'ज्ञानादि' इत्यधिकं प्रक्षिप्तं केनचिदिति भाति। दृष्टान्ते तत्कृतभेदाभावात्॥

7. इत ऊर्ध्वं 'भेददृष्ट्यपवादात्' इति संग्रहवाक्यं विव्रियते॥

प्रतिपादिन्यश्च श्रुतयः सहस्रशो विद्यन्ते। यदुक्तं ज्ञानादिलक्षणभेदात् इति। अत्रोच्यते। न। अनभ्युपगमात्। बुद्ध्यादिभ्यो व्यतिरिक्ता[1] विलक्षणाश्च ईश्वराद्भिन्नलक्षणा आत्मानो न सन्ति। एक एवेश्वरश्च आत्मा सर्वभूतानां नित्यमुक्तोऽभ्युपगम्यते। बाह्यश्च[2] बुद्ध्यादिसमाहार-सन्तानाहङ्कारममत्वादिविपरीतप्रत्ययप्रबन्धाविच्छेदलक्षणो नित्यशुद्ध-मुक्तविज्ञानात्मेश्वरगर्भो[3] नित्यविज्ञानावभासः[4], चित्तचैत्यबीजबीजि-स्वभावः[5], कल्पितोऽनित्यविज्ञान ईश्वरलक्षणविपरीतोऽभ्युपगम्यते । यस्याविच्छेदे[6] संसारव्यवहारः, विच्छेदे च मोक्षव्यवहारः। अन्यश्च मृत्प्रलेपवत् प्रत्यक्षप्रध्वंसो देवपितृमनुष्यादिलक्षणो भूतविशेषसमाहारः[7]। न पुनश्चतुर्थोऽन्यो[8] भिन्नलक्षण ईश्वरादभ्युपगम्यते। बुद्ध्यादिकल्पितात्मा-व्यतिरेकाभिप्रायेण तु 'लक्षणभेदात्' इत्याश्रयासिद्धो हेतुः। ईश्वरादन्य-स्याऽऽत्मनो[9]ऽसत्त्वात् ॥

## एकस्मिन्नेवाऽऽत्मनि संसारित्वासंसारित्वरूपविरुद्धधर्मसमावेशोपपत्तिः

४३. ईश्वरस्यैव विरुद्धलक्षणत्वमयुक्तम् इति चेत्। सुख-

1. बुद्ध्याद्युपाधिरहिता इत्यर्थः। उपाधिकृत एव जीवेश्वरभेद इत्यभ्यु-पगमात् ॥
2. 'बाह्यश्चक्षुर्बुद्ध्यादि ....' इति वा ॥ तत्र चक्षुःशब्द अधिक एव ॥
3. ईश्वर एव सन् संसारलक्षणवानिव भातीत्यभिप्रायेण 'ईश्वरगर्भ' इत्युक्तिः ॥
4. चैतन्याभास एवायमित्यर्थः ॥
5. 'चित्तं ज्ञानम्, चैत्याः सुखादयः, बीजमविद्यादि, बीजि शरीरम्। तत्स्वभावविशिष्टस्य विशेषणतादात्म्यादित्यर्थः।' इति टीका ॥
6. 'यस्य विशिष्टरूपस्य' इति टीका ॥
7. 'कार्यकरणसंघातलक्षणः' इत्यर्थः स्यात् ॥
8. नित्यविज्ञानस्वरूप ईश्वरः, तदाभासरूपः कल्पितात्मा द्वितीयः, भूतसंघातलक्षणस्तृतीयः। एतेभ्योऽन्यश्चतुर्थ इत्यर्थः ॥
9. उक्तत्रितयादन्यस्य ॥



दुःखादियोगश्च। न। निमित्तत्वे सति लोकविपर्ययाध्यारोपणात्[1], सवितृवत्। यथा हि सविता नित्यप्रकाशरूपत्वात्[2] लोकाभिव्यक्त्य-नभिव्यक्तिनिमित्तत्वे[3] सति लोकदृष्टिविपर्ययेण उदयास्तमयाहोरात्रादिकर्तृ-त्वाध्यारोपभाग् भवति, एवम् ईश्वरे नित्यविज्ञानशक्तिरूपे लोकज्ञानापोह[4]-सुखदुःखस्मृत्यादिनिमित्तत्वे सति[5] लोकविपरीतबुद्ध्या[6] अध्यारोपितं विपरीतलक्षणत्वं सुखदुःखादयश्च न स्वतः[7]। आत्मदृष्ट्यनुरूपाध्या-रोपाच्च। यथा घनादिविप्रकीर्णे अम्बरे येनैव सवितृप्रकाशो न दृश्यते, स आत्मदृष्ट्यनुरूपमेवाध्यस्यति 'सविता इदानीमिह न प्रकाशयति' इति सत्येव प्रकाशेऽन्यत्र, भ्रान्त्या[8]। एवम् इह बौद्धादिवृत्त्युद्भवाभिभवा-कुलभ्रान्त्या अध्यारोपितः सुखदुःखादियोग उपपद्यते। तत्स्मरणाच्च। तस्यैव ईश्वरस्यैव हि स्मरणम् 'मत्तः स्मृतिर्ज्ञानमपोहनं च' (गी. १५-१५), 'नादत्ते कस्यचित् पापम्'[9] (गी. ५-१५) इत्यादि। अतो नित्यमुक्तो एकस्मिन् सवितरीव लोकाविद्याध्यारोपितम् ईश्वरे संसारित्वम्। शास्त्रादिप्रामाण्यादभ्युपगतमसंसारित्वम् इत्यविरोध इति ॥

## प्रत्येकं ज्ञानादिभेदेनात्मभेदो नास्ति

४४. एतेन प्रत्येकं ज्ञानादिभेदः[10] प्रत्युक्तः। सौक्ष्म्यचैतन्य-सर्वगतत्वाद्यविशेषे च भेदहेत्वभावात्[11]। विक्रियावत्त्वे चानित्यत्वात्[12]।

1. लोकैर्विपर्ययेणाध्यारोपणात् ॥
2. नित्यप्रकाशरूपः सन्नपीत्यर्थे एतदुक्तम् ॥
3. कारणान्तरवशादिति शेषः ॥
4. ज्ञानतदपगमयोः ॥
5. बुद्धिवृत्त्याद्युपाधिवशादिति शेषः ॥
6. लोकानां विपरीतबुद्ध्या ॥
7. न निरुपाधिकस्य परमार्थत एव ॥
8. भ्रान्त्या अध्यस्यतीति संबन्धः ॥
9. 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इत्युत्तरार्धमप्यनुसंधेयमत्र॥
10. ज्ञानादिभेदनिमित्त आत्मभेद इति व्याख्येयम्। आत्मभेदस्यैव प्रतिवक्ष्यमाणत्वात् ॥
11. परमार्थत इति शेषः ॥
12. अनित्यत्वप्रसङ्गात् वा ॥

मोक्षे च विशेषानभ्युपगमात्[1]। अभ्युपगमे च नित्यत्वप्रसङ्गात्[2]। अविद्यावदुपलभ्यत्वाच्च भेदस्य[3] तत्क्षये अनुपपत्तिरिति सिद्धमेकत्वम्। तस्मात्, शरीरेन्द्रियमनोबुद्धिविषयवेदनासंतानस्य अहङ्कारसंबन्धादज्ञानबीजस्य नित्यविज्ञानान्यनिमित्तस्य आत्मतत्त्वयाथात्म्यविज्ञानाद्विनिवृत्तौ अज्ञानबीजस्य विच्छेदे आत्मनो मोक्षसंज्ञा। विपर्यये च बन्धसंज्ञा। स्वरूपापेक्षत्वादुभयोः[4] ॥

## ब्रह्मनिमित्ता देवानां महिमप्राप्तिः

४५. ब्रह्म 'ह' इत्यैतिह्यार्थः। पुरा किल देवासुरसंग्रामे जगत्स्थितिपरिपिपालयिषया आत्मानुशासनानुवर्तिभ्यो देवेभ्यो अर्थिभ्योऽर्थाय विजिग्ये अजैषीत् असुरान्। ब्रह्मण इच्छानिमित्तो विजयो देवानां बभूवेत्यर्थः। तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। यज्ञादिलोकस्थित्यपहारिष्वसुरेषु पराजितेषु देवा वृद्धिं पूजां वा प्राप्तवन्तः ॥

## ब्रह्मणो यक्षरूपेणाविर्भावः

**तद्धैषां विजज्ञौ ......... यक्षमिति ॥ २ ॥**

४६. त ऐक्षन्त इति मिथ्याप्रत्ययत्वात् हेयत्वख्यापनार्थ[5]

---

1. मोक्षे हि समाना आत्मान इष्यन्ते मोक्षवादिभिरित्यभिप्रायः ॥

2. मोक्षेऽपि भेदाभ्युपगमेऽनिष्टमाह– नित्यत्वप्रसङ्गात्। ज्ञानादिभेदकधर्माणामिति शेषः। तथा च मोक्षानिष्पत्तिरेवेति भावः। अनित्यत्वप्रसङ्गादिति मुद्रितपुस्तकपाठः। स चायुक्तः। न हि बन्धकाले विशेषाभ्युपगमेऽप्यनित्यत्वं स्वीकुर्वन्ति वादिन इति ॥

3. सुषुप्त्यादिष्वनुपलब्धेरिति भावः ॥

4. स्वरूपस्य बन्धमोक्षौ वक्तव्यौ। उभयोरप्यवस्थयोरनुवृत्तेस्तस्य। स्वरूपस्य च विशेषाभावे, अविद्यातन्निवृत्तिकृतावेव बन्धमोक्षावित्यायातीति भावः॥

5. उत्तरत्र विवरणे 'हातव्यताख्यापनार्थः' इत्येव दर्शनात् 'हेयत्वख्यापनार्थम्' इति आ॥ पाठो मुद्रणदोषः स्यात् लेखकप्रमादो वा ॥



आम्नायः[1]। ईश्वरनिमित्ते विजये 'स्वसामर्थ्यनिमित्तोऽस्माकमेवायं विजयः, अस्माकमेवायं महिमा' इत्यात्मनो जयादिश्रेयोनिमित्तं सर्वात्मानम् आत्मस्थं सर्वकल्याणास्पदमीश्वरमेवाऽऽत्मत्वेनाबुद्ध्वा पिण्डमात्राभिमानाः सन्तो यं मिथ्याप्रत्ययं चक्रुः, तस्य पिण्डमात्रविषयत्वेन मिथ्याप्रत्ययत्वात् सर्वात्मेश्वरयाथात्म्यावबोधेन हातव्यताख्यापनार्थः 'तद्धैषाम्' इत्याद्याख्यायिकाम्नायः ॥

तद्ब्रह्म ह किल एषां देवानामभिप्रायं मिथ्याहंकाररूपं विजज्ञौ विज्ञातवत्। ज्ञात्वा च मिथ्याभिमानशातनेन तदनुजिघृक्षया देवेभ्योऽर्थाय तेषामेव इन्द्रियगोचरे नातिरूपे प्रादुर्बभूव। महेश्वरशक्तिमायोपात्तेन अत्यन्ताद्भुतेन प्रादुर्भूतं किल केनचिद् रूपविशेषेण। तत् किल उपलभमाना अपि देवा न व्यजानत न विज्ञातवन्तः किमिदं यदेतद् यक्षं पूज्यम् इति ॥ २ ॥

## अग्निवाय्वोर्गर्वभङ्गः

**तेऽग्निमब्रुवन् .......... तथेति ॥ ३ ॥**
**तदभ्यद्रवत् .......... अहमस्मीति ॥ ४ ॥**
**तस्मिंस्त्वयि .......... पृथिव्यामिति ॥ ५ ॥**
**तस्मै तृणं .......... यदेतद्यक्षमिति ॥ ६ ॥**
**अथ वायुमब्रुवन् .......... तथेति ॥ ७ ॥**
**तदभ्यद्रवत् .......... अहमस्मीति ॥ ८ ॥**
**तस्मिंस्त्वयि .......... पृथिव्यामिति ॥ ९ ॥**
**तस्मै .......... यदेतद्यक्षमिति ॥ १० ॥**

## तृणनिधाने आशयः

४७. तद्विज्ञानायाग्निमब्रुवन्। तृणनिधाने अयमभिप्रायः। अत्यन्त-

---

1. तद्धैषामित्यादिः इति शेषः। अत्र पूर्वमन्त्रोत्तरार्धस्यार्थमनूद्यैव द्वितीयमन्त्रस्यावतरणिका क्रियत इति मन्तव्यम् ॥

संभावितयोरग्निमारुतयोस्तृणदहनादानाशक्त्या आत्मसंभावना शातिता भवेदिति ॥ ३-१० ॥

### इन्द्रस्य गर्वभङ्गः

अथेन्द्रमब्रुवन् ............ तिरोदधे[1] ॥ ११ ॥

### इन्द्रस्य संभाषणनिराकरणं ब्रह्मणा

४८. इन्द्र आदित्यो वज्रभृद् वा[2]। अविरोधात्। इन्द्रोपसर्पणे ब्रह्म तिरोदधे– इत्यत्र[3] अयमभिप्रायः 'इन्द्रोऽहम्' इत्यधिकतमोऽभिमानोऽस्य। 'सोऽहम् अग्न्यादिभिः[4] प्राप्तं वाक्संभाषणमात्रमप्यनेन न प्राप्तोऽस्मि' इत्यभिमानं कथं नु[5] नाम जह्यादिति तदनुग्रहायैवान्तर्हितं तद्ब्रह्म बभूव ॥ ११ ॥

### उमां प्रतीन्द्रकृतः प्रश्नः

स तस्मिन्नेवाऽऽकाशे ............ किमेतद्यक्षमिति ॥ १२ ॥

### उमा नाम विद्यैव

४९. स शान्ताभिमान इन्द्रोऽस्यर्थं ब्रह्म विजिज्ञासुः, यस्मिन्नाकाशे ब्रह्मणः प्रादुर्भाव आसीत्तिरोधानं च, तस्मिन्नेव स्त्रियम् अतिरूपिणीं विद्याम् आजगाम। अभिप्रायोद्बोधहेतुत्वाद् रुद्रपत्नी उमा हैमवतीव सा[6] शोभमाना विद्यैव। विरूपोऽपि विद्यावान् बहुशोभते ॥ १२ ॥

———

1. अत्र भाष्यबलात् 'तदभ्यद्रवत्तत्तस्मात्' इति पाठं केचिदनुमिमते ॥
2. अयं विकल्पः पदभाष्ये न दृश्यते ॥ 3. 'इत्यस्य' वा ॥
4. बहुवचनं कथमुपपादनीयमितीदं चिन्त्यम् ॥
5. 'कथं न नाम' इति मुद्रितपाठ एवं परिवर्तितः ॥
6. 'सा' इत्यस्य स्थाने 'बहु' वा ॥



## अथ चतुर्थः खण्डः

### उमोपदेशात्संजातं ज्ञानम्

ब्रह्मेति[1] होवाच ............ ब्रह्मेति ॥ १ ॥
तस्माद्वा एते ............ ब्रह्मेति ॥ २ ॥
तस्माद्वा इन्द्रो ............ ब्रह्मेति ॥ ३ ॥

५०. तां च पृष्ट्वा तस्या एव वचनाद्विदांचकार विदितवान्। अत इन्द्रस्य बोधहेतुत्वाद्विद्यैवोमा। विद्यासहायवान् ईश्वर इति स्मृतिः (?)। यस्मात्, इन्द्रविज्ञानपूर्वकम् अग्निवाय्विन्द्राः (?) ते ह्येनत् नेदिष्ठम् अतिसमीपं ब्रह्मविद्यया ब्रह्म प्राप्ताः सन्तः पस्पर्शुः स्पृष्टवन्तः। ते हि एनत् प्रथमः प्रथमं विदाञ्चकार। विदाञ्चक्रुरित्येतत्। तस्मात्, अतितराम् अतीत्यान्यान् अतिशयेन दीप्यन्ते अन्यान्देवान्। ततोऽपीन्द्रोऽतितरां दीप्यते। आदौ ब्रह्मविज्ञानात् ॥

### ब्रह्मविषयकोपासनानि

तस्यैष आदेशो ............ इत्यधिदैवतम् ॥ ४ ॥
अथाध्यात्मं ............ सङ्कल्पः ॥ ५ ॥
तद्ध तद्वनं नाम ............ संवाञ्छन्ति ॥ ६ ॥

### अधिदैवतोपासनम्

५१. तस्यैष आदेशः। तस्य ब्रह्मणः, एषः वक्ष्यमाणः, आदेशः उपासनोपदेश इत्यर्थः। यस्माद् देवेभ्यो विद्युदिव सहसैव प्रादुर्भूतं द्युतिमत्, तस्माद् विद्युतो विद्योतनं यथा, यदेतद् ब्रह्म व्यद्युतत् विद्योतितवत्[2]। आ इव[3] इत्युपमार्थ आशब्दः। यथा घनान्धकारं

1. 'सा ब्रह्मेति' इति केषुचिदेव पुस्तकेषु ॥
2. एतदनुपपन्नमिति पदभाष्ये ॥ 3. नास्त्येतत् पदम् वा ॥

विदार्य विद्युत् सर्वतः प्रकाशते, एवं तद्ब्रह्म देवानां पुरतः सर्वतः प्रकाशवद्व्यक्तीभूतम्। अतो व्यद्युतदिव इत्युपास्यम्। 'यथा सकृद्विद्युत्तम्' (बृ. २-३-६) इति च वाजसनेयके। यस्माच्चेन्द्रोपसर्पणकाले न्यमीमिषत् —यथा कश्चिच्चक्षुर्निमेषणं कृतवानिति– 'इति' 'इत्' इत्यनर्थकौ निपातौ–[1] निमिषितवदिव तिरोभूतम्। इति एवम् अधिदैवतं देवताया अधि यद्दर्शनम् अधिदैवतं तत्[2] ॥

## अध्यात्मोपासनम्

५२. अथ अनन्तरम् अध्यात्मम्। आत्मनः अधि[3] आत्मविषयम् अध्यात्मम्। उच्यते इति वाक्यशेषः। यदेतद् यथोक्तलक्षणं ब्रह्म गच्छतीव प्राप्नोतीव विषयीकरोतीव इत्यर्थः। न पुनर्विषयीकरोति मनः। अविषयत्वाद्ब्रह्मणः। अतो 'मनो न गच्छति'[4] (१–३), 'येनाहुर्मनो मतम्' (१-५) इति[5] चोक्तम्। 'गच्छतीव' इति तु मनसोऽपि मनस्त्वात्, आत्मभूतत्वाच्च ब्रह्मणः। तत्समीपे मनो वर्तत इति उपस्मरति अनेन मनसैव तद्ब्रह्म विद्वान् यस्मात्, तस्माद् ब्रह्म गच्छतीव इत्युच्यते। अभीक्ष्णं पुनः पुनश्च[6] सङ्कल्पः ब्रह्मप्रेषितस्य मनसः। अत उपस्मरणसङ्कल्पादिभिर्लिङ्गैर्ब्रह्म मन आद्यात्मभूतम्[7] इत्युपास्यम् इत्यभिप्रायः ॥

५३. तस्य चाध्यात्मम्[8] उपासने गुणो विधीयते। तद्ध तद्वनम् तदेतद् ब्रह्म तच्च तद् वनं च तत् परोक्षं[9] वनं संभजनीयम्।

1. — — एवं चिह्नद्वयावृतं वाक्यद्वयं 'तिरोभूतम्' इत्यस्यानन्तरं निवेशितम्। पदभाष्ये प्रदर्शितवाक्येन तुलनीयमेतत् ॥

2. अस्मिन्नपि भाष्ये पदभाष्यवत् चक्षुर्निमेषणं कथमधिदैवतत्वेन परिगणितमिति न निरूपितम् ॥

3. वा ॥ पाठ एषः ॥ 4. श्रुत्यर्थानुवाद एषः ॥

5. 'इति हि' इति आ ॥ पाठे हिरधिकः ॥

6. चकारो नास्ति वा ॥ 7. 'मनोऽध्यात्मभूतम्' इति आ ॥

8. इदमध्यात्मोपासनाङ्गतया उक्तं कथमिति तु नोक्तमत्र ॥

9. अस्य विशेषणस्याभिप्रायो न विज्ञातः ॥



वनतेस्तत्कर्मणः[1]। तस्मात्तद्वनं नाम। ब्रह्मणो गौणं हीदं नाम। तस्मात् अनेन गुणेन तद्वनम् इत्युपासितव्यम्। स यः कश्चित् एतद् यथोक्तम् एवं यथोक्तेन गुणेन 'वनम्' इत्यनेन नाम्ना अभिधेयं ब्रह्म वेद उपास्ते। तस्यैतत् फलमुच्यते। सर्वाणि भूतानि एनम् उपासकम् अभिसंवाञ्छति इहाभिसंभजन्ते सेवन्ते स्म[2] इत्यर्थः। यथागुणोपासनं हि फलम् ॥

## ब्राह्मी उपनिषत्

उपनिषदं भो ............ उपनिषदमब्रूमेति ॥ ७ ॥

५४. 'उपनिषदं भो ब्रूहि' इत्युक्तायामप्युपनिषदि शिष्येणोक्त आचार्य आह– उक्ता कथिता ते तुभ्यम् उपनिषद् आत्मोपासनम्। अधुना ब्राह्मीं वाव ते तुभ्यं ब्रह्मणो ब्राह्मणजातेः[3]। उपनिषदम् अब्रूम वक्ष्याम इत्यर्थः। वक्ष्यति हि। ब्राह्मी नोक्ता उक्ता त्वात्मोपनिषत्। तस्मान्न भूताभिप्रायः[4] 'अब्रूम' इत्ययं शब्दः ॥ ७ ॥

तस्यै ............ सत्यमायतनम् ॥ ८ ॥

५५. तस्यै[5] तस्या वक्ष्यमाणायाः उपनिषदः। तपः ब्रह्मचर्यादि, दमः उपशमः, कर्म अग्निहोत्रादि– इत्येतानि प्रतिष्ठा आश्रयः। एतेषु हि सत्सु ब्राह्मी उपनिषत् प्रतिष्ठिता भवति। वेदाः चत्वारः, अङ्गानि च सर्वाणि। 'प्रतिष्ठा' इत्यनुवर्तते। ब्रह्माश्रया हि विद्या[6]।

1. वन संभजन इति धातोर्निष्पन्नमिदं रूपमित्यर्थः ॥

2. 'स्म' इत्यस्य नार्थोऽत्र ॥

3. 'ब्राह्मणजात्यनुष्ठेयां विद्यामात्मज्ञानसाधनभूताम्' इति व्याख्यातं टीकाकारेण ॥

4. विरुद्धमिदं व्याख्यानं पदभाष्यस्थेन। तत्रत्यां चिन्तामवलोकयन्तु पाठकाः ॥

5. एतत्तु नास्ति आ ॥

6. एतद्वाक्यमत्र किमर्थमागतमिति न ज्ञायते ॥

सत्यं यथाभूतवचनम्, अपीडाकरम् आयतनं निवासः। सत्यवस्तु हि सर्वं यथोक्तम् आयतने इवावस्थितम् ॥ ८ ॥

## उपनिषत्फलम्

**यो वा एतामेवं ......... प्रतितिष्ठति प्रतितिष्ठति ॥ ९ ॥**

## उपनिषदनुष्ठानफलम्

५६. ताम् एतां तप आद्यङ्गां तत्प्रतिष्ठां ब्राह्मीमुपनिषदं सायतनाम् आत्मज्ञानहेतुभूताम् एवं यथावद् यो वेद अनुवर्तते अनुतिष्ठति, तस्य एतत्फलमाह– अपहत्य पाप्मानम्। अपक्षीय धर्माधर्मौ इत्यर्थः। अनन्ते अपारे, अविद्यमानान्ते। स्वर्गे लोके सुखप्राये निर्दुःखात्मनि परे ब्रह्मणि ज्येये महति सर्वमहत्तरे प्रतितिष्ठति। सर्ववेदान्तवेद्यं ब्रह्म आत्मत्वेनावगम्य तदेव ब्रह्म प्रतिपद्यत इत्यर्थः[1] ॥ ९ ॥

---

1. **अत्रस्थसमाप्तिवाक्यविषये प्रस्तावना द्रष्टव्या ॥**



# केनोपनिषत्सारः

( पदभाष्यानुसारेण संगृहीतः )

## प्रथमः खण्डः

१–२. मनः सर्वेन्द्रियाणि च स्वत एव स्वविषयेषु न प्रवर्तन्ते। स्वप्रत्यगात्मभूतपरब्रह्मचैतन्यसंनिधिबलादेव तु तदनुगृहीतानि विषयग्रहणं कर्तुं प्रभवन्ति। तस्मादेतेषु ममाहंभावमुज्झित्वा ये धीमन्तस्तत्साक्षिभूतं चैतन्यमेवाऽऽत्मानं प्रतिपद्यन्ते त एवामृता भवन्ति ॥

३–४. मनइन्द्रियाणामगोचरत्वादेव यद्यप्यात्मा न मनसा विषयीकर्तुं शक्यते, नापि वाचा व्याकृत्योपदेष्टुम्, तथापि विदिताविदिताभ्यां व्याकृताव्याकृताभ्यामन्यत्वेन हेयोपादेयरहितस्वात्मभूतत्वादागमेनोपदेष्टुं प्रतिपत्तुं च शक्यत एव ॥

५–९. सोपाधिकमुपास्यं निरुपाधिकं ज्ञेयं चेति द्विरूपं भवति ब्रह्म। तत्रोपास्यरूपं विषयीकर्तुं शक्यते ध्यातृभिः। ज्ञेयं तु निरुपाधिकत्वात्, सर्वेन्द्रियाणां मनसश्च प्रत्यगात्मत्वान्नैव शक्यं विषयीकृत्य ज्ञातुम्। तथापि तु येन सर्वेन्द्रियव्यवहाराः सिध्यन्ति तत्सर्वावभासकं चैतन्यं मम प्रत्यगात्मभूतं ब्रह्मेत्येवमवगन्तुं पार्यते ॥

## द्वितीयः खण्डः

१–४. तदेवं ब्रह्मणः सर्वथाप्यविषयत्वाद् यो वेद 'अहं वेद ब्रह्म ज्ञानेन सम्यग्विषयीकृत्य' इत्येवम्, स नैव वेद ब्रह्म। यः पुनरविषयभूतमेव ब्रह्म सर्वात्मत्वात् स्वतःसिद्धमिति वेद, स एव तद्वेद। प्रत्यन्तःकरणप्रत्ययं हि तद्ब्रह्म तत्प्रकाशकसाक्षिचैतन्यात्मना स्वयं प्रथते। अत एवाविषयत्वेऽप्यत्यन्तप्रसिद्धत्वं तस्य। एवं स्वात्मत्वेन यो ब्रह्म जानाति स तत एव मृत्युपराकरणसामर्थ्यमात्मना प्राप्नोति मुख्यामृतत्वं च गच्छति ॥

५. इहैव जन्मनि चेन्मनुष्यो स्वमात्मानमुक्तलक्षणं यथोक्तप्रकारेण वेद तर्हि तस्य परमार्थसत्यलाभो भवति। अन्यथा तु संसारप्राप्त्या महान् विनाशो भवति। तस्माद्विवेकिना सर्वभूतेषु स्थितमद्वितीयात्मानं यथोक्तेन विधिना साक्षात्कृत्य कार्यकरणसङ्घाते ममाहंभावं परित्यज्यामृतत्वं संपादनीयम् ॥

## तृतीयः खण्डः

१–२. पुरा किल देवासुरसङ्ग्रामे ब्रह्म देवानामनुग्रहार्थमसुरान् विजित्य तद्विजयफलं देवेभ्यः प्रादात्। देवास्तु परिच्छिन्नात्मबुद्धया 'अस्माकमेवायं विजयः, अस्माकमेवायं विजयफलभूतो महिमा च' इत्येवं प्रत्येकं मन्यन्ते स्म। ब्रह्म तु सर्वज्ञत्वादेषामभिप्रायं विज्ञायोक्तमिथ्याभिमानपरिहारार्थमत्यद्भुतेन केनचिद् यक्षरूपेण प्रादुर्बभूव ॥

३–१०. तदा देवाः किमिदं महद्भूतमित्यजानन्तः सान्तर्भयास्तज्जिज्ञासार्थमग्निं प्रेषयामासुः। ब्रह्म तमपृच्छत् कोऽसीति। 'अहं प्रसिद्धोऽग्निर्जातवेदाः सर्वदग्धा' इति स्वस्थानं नामोक्त्वैव श्लाघितवतस्तस्याग्रे तृणमेकं निधाय 'एवं तर्ह्येतत् तृणं दह' इत्यवोचद्ब्रह्म। तच्चाशक्नोद्दग्धुमग्निः सर्वोत्साहेन प्रयतमानोऽपि। ततो व्रीडितोऽग्निस्तस्मात् प्रतिनिववृते 'नैतदशकं विज्ञातुम्' इति। ततस्ते देवा वायुं प्रेषितवन्तस्तद्विज्ञानार्थम्। सोऽप्युक्तप्रकारेण ब्रह्मणा संभाषितो स्वाग्रे निहितं तृणमप्येकं चालयितुमशक्नुवन् प्रतिजगाम देवान्; उवाच च 'नाहं शक्तोऽभूवं विज्ञातुं किमिदं यक्षरूपम्' इति ॥

११. ततो देवा इन्द्रमेव देवराजं प्रेषयांबभूवुर्यक्षस्वरूपनिर्धारणार्थम्। तस्य तु संवादमप्यदत्वा क्षणेन तिरोबभूव ब्रह्म। 'किमिदम्?' इति चिन्तयंस्तत्रैव स्थित इन्द्रः किञ्चित्कालानन्तरं ब्रह्मविद्यामुमारूपिणीं तस्यानुग्रहार्थं प्रसन्नां ददर्श। पप्रच्छ च किमेतद्यक्षरूपमिति ॥

## चतुर्थः खण्डः

१. सा प्रोवाच ब्रह्मैवेदं यक्षरूपम्। अस्यैव च ब्रह्मणो विजये यूयमेवं महिमानं प्राप्तवन्त इति। तत एवोपदेशादिन्द्रोऽप्यजानात् सर्वमिदं ब्रह्मणो महिमेति। इन्द्रद्वारा चाग्निवाय्वादयोऽपि विदांचक्रुः सर्वमिदं ब्रह्मैवेति ॥

२–३. यत एवमिन्द्रादयो ब्रह्मदर्शनसंवादादिना ब्रह्मसामीप्यं गताः। तत एव तेऽन्यान् देवान् स्वशक्तिगुणादिभिरतिशेरते। विशेषतश्चेन्द्रः सर्वान्देवानतिशेते, यत्कारणमयमुमोपदेशाद् ब्रह्मस्वरूपं विदितवानिति ब्रह्मविद्यास्तुतिः ॥

४–५. तस्यैतस्य ब्रह्मण उपमानम् विद्युतो विद्योतनमिव विषयं प्रति चक्षुषः प्रकाशतिरोभाव इव चात्यन्तं द्रुतप्रकाशनधर्मि ब्रह्मेत्येतदधिदैवतम्। अध्यात्मं चोपमानं साधकस्य मनो गच्छतीव भृशं संकल्पमात्रेणेति। मनःप्रत्ययसमकालमभिव्यक्तिधर्मि हि ब्रह्मेति ॥



६. तदेतद्ब्रह्म सर्वप्रत्यगात्मभूतत्वात् 'तद्वनम्', तैः प्राणिभिः संभजनीयम्, इत्येतेनैव गुणनाम्ना चिन्तनीयम्। एवमुपासिता सर्वेषामपि प्राणिनां ब्रह्मवदेव संभजनीयो भवति ॥

७. एतावदेवोपनिषद् ब्रह्मणो नातःपरमस्ति। एतदधिगमार्थं तपो, दमः, कर्म, साङ्गवेदाध्ययनं सत्यमित्येतत्सर्वमनुष्ठातव्यम् ॥

८. यो वै वर्णितां ब्रह्मविद्यामेवं वेद, स निवृत्तसकलकल्मषः सन् अनन्तानन्दरूपे परब्रह्मण्येव तदात्मना निष्ठां लभते ॥

॥ ॐ तत्सत् ॥

---

# अथ मन्त्राणां वर्णानुक्रमणिका

(पदभाष्यानुसारेण)



# अथ मन्त्राणां वर्णानुक्रमणिका

(वाक्यभाष्यपृष्ठपरामर्शिका)

# अथ भाष्यस्थमुख्यशब्दसूची

☞ अत्र दत्ता सङ्ख्या भाष्यखण्डपरामर्शिका। अर्धविराम (;) चिह्नं तु ततः परं वाक्यभाष्यखण्डा ग्राह्या इति सूचयति। वा॰ = वाक्यभाष्ये ॥

---

१०००, १०-७-१९५९. अध्यात्मप्रकाश मुद्रणालयः, होळेनरसीपुरम्

### अध्यात्मप्रकाशकार्यालयप्रकाशिताः

## कतिचन वेदान्तग्रन्थाः

१. **वेदान्तडिण्डिमः** – श्रीमन्नृसिंहसरस्वतीतीर्थकृतः । भावबोधिन्याख्यया नवीन-व्याख्यया संयुतः । शोधितपाठश्च ॥ **इदानींतनं मूल्यम् रू. ०.६३**

२. **मूलाविद्यानिरासः अथवा शङ्करहृदयम्** – अद्वैतवेदान्तप्रक्रियातत्त्वविमर्शनपरो निबन्धः सप्रमाणवचनः ॥ **मूल्यम् रू. २.५०**

३. **सुगमा** – अध्यासभाष्यस्य नवीनव्याख्या श्रीसच्चिदानन्देन्द्रसरस्वतीप्रणीता । भाष्यकारोक्त्युपजीवनेनैव शाङ्करवेदान्तप्रक्रिया वाचकहृदयंगमीकृता ॥ **मूल्यम् रू. १.५०**

४. **माण्डूक्यरहस्यविवृतिः** – उपनिषद्व्याख्या गौडपादीयकारिकाव्याख्या च । माण्डूक्योपनिषदि गर्भीकृतानि नैकानि रहस्यानि श्रीगौडपादाभिमतप्रक्रियानुसारेणोद्घाटितानि ॥ **मूल्यम् रू. १२**

५. **वेदान्तबालबोधिनी** – भगवत्पादीयप्रातःस्मरणस्तोत्रनवीनव्याख्यानरूपा । श्रीसच्चिदानन्देन्द्रसरस्वतीसंयमिभिः प्रणीता । आत्मनः सच्चिदानन्दपरब्रह्मरूपत्वम्, स्वयंज्योतीरूपत्वम्, सर्वात्मत्वं चेतीत्येतदुपदेशत्रयमत्र स्फुटीकृतं सार्वजनीनानुभवानुसारिशास्त्रदृष्ट्यवलम्बनेन गुरुशिष्यसंवादमिषेण ॥ **मूल्यम् रू. ०.७५**

६. **ईशावास्योपनिषत् श्रीशाङ्करभाष्यसंयुता** – अत्र च भाष्यं विषयविभागानुसारेण प्रविभक्तग्रन्थशरीरम्, संशोधितपाठम्, भाष्यान्तरसंवादिटिप्पणयुतम्, जिज्ञासूपयोगिपरिशिष्टमन्त्रानुक्रमणिकाशब्दसूच्यादिसमेतं च ॥ **मूल्यम् रू. ०.५०**

७. **केनोपनिषत् श्रीशाङ्करभाष्यद्वयसंयुता** – श्रीसच्चिदानन्देन्द्रसरस्वतीसंयमिभिः सटिप्पणं शब्दसूच्यादि परिकरसमलङ्कृतं च ॥ **मूल्यम् रू. २.००**

### प्रचिकाशयिषिता ग्रन्थाः

**मुण्डकोपनिषत् श्रीशाङ्करभाष्ययुता** – टिप्पणादि संयोजितां च ।

**तैत्तिरीयोपनिषद्भाष्यम्** – सटिप्पणं शीक्षावल्लीभाष्यम् आनन्दवल्लीभाष्यं च भाष्यार्थविमर्शिन्याख्यव्याख्यासंवलितम् ॥

**नैष्कर्म्यसिद्धिः** – क्लेशापहारिण्याख्यव्याख्यायुता ॥

पुस्तकप्राप्तिस्थानम् :–

**अध्यात्मप्रकाशकार्यालयः, होळेनरसीपुरम्, (मैसूरु संस्थानम्.)**

# BACK - TO - SHANKARA SERIES

### Ready for Sale

1. **Vedanta Dindima** :— Of Sri Narasimha Saraswati. Critically edited with an original sanskrit commentary called the "Bhava Bodhini". Rs. 0.63

2. **Mulavidya Nirasa or Sri Shankara Hridya** :— An original work on Adwaita Vedanta discussing the nature and destruction of Avidya according to Shankara. Rs. 2.50

3. **Sugama** :— A new original Sanskrit Commentary on Sri Shankara's Introduction to his famous Sutra Bhashya by Swami Satchidanandendra Saraswathi. It deals eminantly with the essentials of Sri Shankara's Method and refutes antagonistic views ably and nobly. Rs. 1.50

4. **Vedanta Balabodhini** :— An original Sanskrit Commentary by Swami Satchidanandendra Saraswathi on the "Pratah Smarana Stotram" of Sri Shankara Bhagavatpadacharya in the form of a dialogue between master and pupil. Very useful for such students of Vedanta as are in need of an exposition appealing directly to exprience of the cardinal teachings of Adwaita as taught by Shankara. Rs. 0.75

5. **Ishavasya Upanished** :— With the Bhashya of Shankaracharya. A critical edition of the Text with Introduction, Notes Summary, Index and other aids. Rs. 0.50

6. **Kena Upanishad** :— With Shankara Bhashya, Introduction etc. Rs 2.00

### Ready for the Press

**Mundaka Upanishad, Tattireeya Upanishad, Naishkarmya Siddhi** etc. with Notes and Commentary by Swami Satchidanandendra Saraswathi.

Postage and forwarding charges extra

*For copies apply to the publishers* :—

THE ADHYATMA PRAKASHA KARYALAYA
HOLENARSIPUR.
HASSAN DISTRICT, MYSORE STATE, SOUTH INDIA.